# अथ निवेदनम् ।



इदं हि चन्द्रसूर्यादिमण्डलगतानेकवक्तव्यताप्रधानं सान्वथाभिधेयाभिधानं नवनवतिगाथापरिमितं मण्डलप्रकरणं नाम प्रकरणं सांप्रतकालीनमन्दमतीनामेकत्र मण्डलविचारसारजिज्ञासूनां भव्यसत्त्वानां तदवबोधाय स्वस्मृतये च जीवाजीवाभिगमादिसूत्रगाथाभिः बृहद्गच्छगगनाङ्गणदिनमणिश्रीमन्मुनिचन्द्रसूरिविरचितसमग्रमण्डलविचारकुलकगाथाभिः पृथक्पृथगागमप्रकीर्णकगतविप्रकीर्णभूतमण्डलविचारलेशाधारविरचितनवीनगाथाभिश्च श्रीमता पण्डितविनयकुशलेन सङ्कलितमित्यस्य प्रकरणस्य प्रान्तगाथाव्याख्यानतः प्रकटमेव ।

अस्य प्रकरणस्योपरि वाचकवर्गस्य सुखावबोधाय जिनागम–उपाङ्ग—प्रकरणादिगतमण्डलविचारानुसरणशीलाऽतीवस्फुटतरव्याख्याना अनेनैव पण्डितप्रवरेण स्वोपज्ञा वृत्तिरपि लिखितेत्यस्य प्रशस्तिगतंद्वितीयकाव्येन स्फुटमेवावसीयते ।

स्वोपज्ञवृत्तियुतस्यास्य प्रकरणस्य विनिर्माता कदा कतमं महीमण्डलं मण्डयामास ? इति जिज्ञासायां जातायां प्रस्तुतप्रकरणस्य प्रशस्तिगतेन—

" गुरुतमतपगणपुष्करसूर्याः श्रीविजयसेनसूरीन्द्राः ।
श्रीमदकब्बरनरवरविहितप्रबलप्रमोदा ये ॥ १ ॥
तेषां शिशुना वृत्तिः स्वोपज्ञा व्यरचि विनयकुशलेन ।
मूलत्राणाह्वपुरे करवाणरसेन्दु १६५२ मितवर्षे ॥ २ ॥"

इत्यनेन काव्यद्वयेन तथा श्रीमन्महेन्द्रसूरिविरचितविचारसप्ततिकाप्रकरणवृत्तिगतेन—

" श्रीतपगणगगनाङ्गणसूरश्रीविजयदेवसूरीणाम् ।
विनियोगाद् वृत्तिरियं विनिर्मिता विनयकुशलेन ॥ १ ॥"

इत्येतत्काव्येन च श्रीमद्विजयसेनसूरिश्रीविजयदेवसूर्योः समानकालवर्तित्वेन विक्रमार्कीयद्विपञ्चाशदधिकषोडशशताब्द्यां मण्डलप्रकरणवृत्तिविरचितत्वेन च श्रीमतो विनयकुशलस्य सत्तासमयोऽपि निर्विवादं विक्रमीयसप्तदशशताब्द्यामेव निश्चीयते ।

अनन्तरोक्तग्रन्थव्यतिरिक्तो ज्योतिश्चक्रविचारनामा ग्रन्थः श्रीमता विनयकुशलेन कृतोऽस्तीति श्रूयते परं न ममासादि ।

अस्य प्रकरणस्य मुद्रणे द्रव्यमाहाय्यं भावनगरवास्तव्यश्रीमालिज्ञातीय–श्रेष्ठि–माणिक्यचन्द्र–तनूज–डजमसी इति नाम्ना कृतम् । तदस्यैतत्कार्यं प्रशंसार्हम् ।

एतस्य संशोधनसमये प्रवर्तकश्रीमत्कान्तिविजयपुस्तकसंग्रहाद्वे नव्ये अनतिशुद्धे पुस्तके समुपलब्धे ।

यद्यप्यनन्तरोदितपुस्तकद्वितयाधारेण सावधानतया संशोधनमकारि तथाप्यत्र दृष्टिदोषेण क्वचनाशुद्धिरवशिष्टा भवेत्तत्र संशोध्य वाचनीयं धीधनैरिति प्रार्थयते—

मच्चरणाब्जचञ्चरीकः

चतुरविजयः ।

॥ अर्हम् ॥

न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरिभ्यो नमः ।

श्रीमद्-विनयकुशलविरचितस्वोपज्ञवृत्तिसङ्कलितं

# मण्डलप्रकरणम् ।

—※※—

श्रीमद्वीरजिनं नत्वा, नित्यानित्यार्थदेशकम् ।
मण्डलादिविचारस्य, कुर्वे वृत्तिं सुबोधिकाम् ॥ १ ॥

अन्यत्र ग्रन्थेषु विस्तराभिहितान् चन्द्रादिमण्डलादिविचारान् वीक्ष्यात्र सङ्क्षेपेण तद्विचाराभिधित्सया मण्डलप्रकरणाभिधानस्य ग्रन्थस्ये-मामाद्यां गाथामाह—

**पणमिअ वीरजिणिंदं, भवमंडलभमणदुक्खपरिमुक्कं ।**
**चंदाइमंडलाई-विआरलवमुद्धरिस्सामि ॥ १ ॥**

पणमि० । श्रीवीरजिनेन्द्रं 'प्रणम्य' नत्वा, किंलक्षणं वीरम् ? भवमण्डलभ्रमणस्य यद् दुःखं तेन परिमुक्त-रहितं, चन्द्रादिमण्डलादिवि-चारलेशमुद्धरिष्यामि, जीवाभिगमाद्यागमादिति शेषः । इह चन्द्रादयः पञ्च-चन्द्र १ सूर्य २ ग्रह ३ नक्षत्र ४ तारका ५ रूपाः, ते

चरादिभेदेन द्विधा । तत्र चराणां मण्डलादिस्वरूपमिह वक्ष्य इति ॥१॥ अत्र पूर्वं तावत्सार्द्धद्वीपद्वयमुद्रद्वयगतचन्द्रसूर्याणां सङ्ख्यामाह—

**ससिरविणो दो चउरो, बार दुचत्ता बिसत्तरी अ कमा ।**
**जंबूलवणोआइसु, पंचसु ठाणेसु नायव्वा ॥ २ ॥**

ससिर० । शशिनो रवयश्च द्वौ चत्वारो द्वादश द्विचत्वारिंशद् द्विसप्ततिर्जम्बूप्रभृतिष्वर्धतृतीयद्वीपेषु लवणकालोदध्योः समुद्रयोश्च पञ्चसु स्थानेषु ज्ञातव्याः । भावना यथा—द्वौ चन्द्रौ द्वौ सूर्यौ जम्बूद्वीपे, एवं चत्वारो लवणसमुद्रे, द्वादश धातकीखण्डे, द्विचत्वारिंशत्कालोदधौ, द्विसप्ततिः पुष्करार्धे इति ॥ २ ॥ अथ निखिले नरलोके चन्द्रसूर्याणां सर्वाग्रमाह—

**बत्तीससयं चंदा, बत्तीससयं च सूरिआ सययं ।**
**समसेणीए सव्वे, माणुसखित्ते परिभमंति ॥ ३ ॥**

बत्तीस० । द्वात्रिंशदधिकं शतं चन्द्रा द्वात्रिंशदधिकं शतं सूर्याश्च 'सततं' निरन्तरं अपेरध्याहारात्सर्वेऽपि मनुष्यलोके 'समश्रेण्या' जम्बूद्वीपगतमेरोः परितः पङ्क्त्या परिभ्रमन्ति ॥ ३ ॥ अथ चन्द्रसूर्याणां कियन्त्यः पंक्तयः कथं च संस्थिता ? इत्याह—

**चत्तारि अ पंतीओ, चंदाइचाण मणुअलोगम्मि ।**
**छावट्ठी छावट्ठी, होई इक्किकिया पंती ॥ ४ ॥**

चत्ता० । इह मनुष्यलोके चन्द्रादित्यादीनां चतस्रः पङ्क्त्यो भवन्ति,

---

१ आदिना स्थिरभेदो ग्राह्य ।

तद्यथा–द्वे पंक्ती चन्द्राणां द्वे च सूर्याणामेकान्तरिते । एकैका च पंक्तिर्भवति षट्षष्टिषट्षष्टिचन्द्रसूर्यसङ्ख्या । तद्भावना चैवम्–एकः किल सूर्यो जम्बूद्वीपे मेरोर्दक्षिणभागे चारं चरन् वर्तते एक उत्तरभागे । तथा एकश्चन्द्रमा मेरोः पूर्वभागे एकोऽपरभागे । तत्र यो मेरोर्दक्षिणभागे सूर्यश्चारं चरन् वर्तते तत्समश्रेणिव्यवस्थितौ द्वौ दक्षिणभागे एव सूर्यौ लवणसमुद्रे, षट् धातकीखण्डे, एकविंशतिः कालोदे, षट्त्रिंशदभ्यन्तरपुष्करार्द्धे इत्यस्यां सूर्यपंक्तौ षट्षष्टिः सूर्याः । तथा यो मेरोरुत्तरभागे सूर्यश्चारं चरन् वर्तते तस्यापि समश्रेण्या व्यवस्थितौ द्वौ सूर्यौ उत्तरभागे लवणसमुद्रे, षट् धातकीखण्डे, एकविंशतिः कालोदे, षट्त्रिंशदभ्यन्तरपुष्करार्द्धे इत्यस्यामपि सूर्यपंक्तौ सर्वसङ्ख्यया षट्षष्टिः सूर्याः । तथा यो मेरोः किल पूर्वभागे चारं चरन् वर्तते चन्द्रस्तत्समश्रेणिव्यवस्थितौ पूर्वभागे द्वौ चन्द्रमसौ लवणे, षट् धातकीखण्डे, एकविंशतिः कालोदे, षट्त्रिंशदभ्यन्तरपुष्करार्द्धे इत्यस्यां चन्द्रपंक्तौ सर्वसङ्ख्यया षट्षष्टिश्चन्द्रमसः । एवं यो मेरोरपरभागे चन्द्रमास्तन्मूलायामपि पंक्तौ षट्षष्टिश्चन्द्रमसो वेदितव्याः । स्थापनाऽग्रे विलोक्या ॥ ४ ॥ अथ नक्षत्राणां पंक्तिस्वरूपमाह—

**छप्पन्नं पंतीओ, नक्खत्ताणं तु मणुअलोगम्मि ।**
**छावट्ठी छावट्ठी, होई इक्किक्किया पंती ॥ ५ ॥**

छप्पन्न० । नक्षत्राणां मनुष्यलोके सर्वसङ्ख्यया षट्पञ्चाशत्पङ्क्तयो भवन्ति । एकैका च पंक्तिर्भवति षट्षष्टिषट्षष्टिनक्षत्रपरिमाणा इत्यर्थः । तथाहि–किलास्मिन् जम्बूद्वीपे दक्षिणतोऽर्द्धभागे एकस्य शशिनः परि-

वारभृतान्यभिजिदादीन्यष्टाविंशतिसङ्ख्याकानि नक्षत्राणि क्रमेण व्यवस्थितानि चारं चरन्ति। उत्तरतोऽप्यर्द्धभागे द्वितीयस्य शशिन परिवारभृतान्यष्टाविंशतिसङ्ख्याकान्यभिजिदादीन्येव नक्षत्राणि क्रमेण व्यवस्थितानि। तत्र दक्षिणतोऽर्धभागे यदभिजन्नक्षत्रं तत्समश्रेणिव्यवस्थिते द्वे अभिजिन्नक्षत्रे लवणसमुद्रे, षड् धातकीखण्डे, एकविंशति कालोदे, षट्त्रिंशदभ्यन्तरपुष्करार्धे इति सर्वसङ्ख्यया षट्षष्टिरभिजिन्नक्षत्राणि पंक्त्या व्यवस्थितानि। एवं श्रवणादीन्यपि दक्षिणतोऽर्द्धभागे पङ्क्त्या व्यवस्थितानि षट्षष्टिसङ्ख्याकानि षट्षष्टिसङ्ख्याकानि भावनीयानि। तथोत्तरतोऽप्यर्द्धभागे यदभिजिन्नक्षत्रं तत्समश्रेणिव्यवस्थिते उत्तरभागे एव द्वे अभिजिन्नक्षत्रे लवणसमुद्रे, षड् धातकीखण्डे, एकविंशतिकालोदे, षट्त्रिंशदभ्यन्तरपुष्करार्द्धे। एवं श्रवणादीनां सर्वनक्षत्राणा पङ्क्त्योऽपि प्रत्येकं षट्षष्टिसङ्ख्याका वेदितव्या इति भवन्ति सर्वसङ्ख्यया षट्पञ्चाशत्सङ्ख्या नक्षत्राणां पङ्क्तयः। एकैका च पंक्तिः षट्षष्टिसङ्ख्येति। किञ्च जम्बूद्वीपे यस्मिन्दिने यदश्विन्यादिनक्षत्रं दक्षिणार्द्धभागे एकस्य चन्द्रस्य परिभोग्यं भवति तस्मिन्नेव दिने तत्समश्रेणिस्थस्य द्वितीयस्य चन्द्रस्योत्तरार्द्धभागे तन्नामकमेव नक्षत्रं परिभोग्यं भवति। एवं सर्वस्मिन् द्वीपे समुद्रे चैकनामकनक्षत्रे एव चन्द्राः सूर्याश्च समकं भवन्ति ॥५॥ अथ ग्रहाणां पंक्तिस्वरूपमाह—

छावत्तरं गहाणं, पंतिसयं होइ मणुअलोगम्मि ।
छावट्ठि अ छावट्ठि अ, होई इक्किकिया पंती ॥ ६ ॥

छावत्तरं० । ग्रहाणामङ्गारकप्रभृतीनां सर्वसङ्ख्यया मनुष्यलोके

' षट्सततं पंक्तिशतं ' षट्सतत्यधिकं पंक्तिशतं भवति, एकैका च पंक्तिर्भवति षट्षष्टिः षट्षष्टिः । अत्रापीयं भावना—जम्बूद्वीपे दक्षिणार्द्धभागे एकस्य शशिनः परिवारभूता अङ्गारकप्रभृतय एवान्येऽष्टाशीतिर्ग्रहाः । तत्र दक्षिणतोऽर्द्धभागे योऽङ्गारकनामा ग्रहस्तत्समश्रेणिव्यवस्थितौ दक्षिणभागे एव द्वावङ्गारकौ लवणसमुद्रे, षट् धातकीखण्डे, एकविंशतिः कालोदे, षट्त्रिंशदभ्यन्तरपुष्करार्द्धे इति, एवं शेषा अपि सप्ताशीतिग्रहाः पंक्त्या व्यवस्थिताः प्रत्येकं षट्षष्टिर्वेदितव्याः । एवमुत्तरतोऽप्यर्द्धभागे पूर्वोक्तदक्षिणपंक्तिसमश्रेणिस्थानामङ्गारकप्रभृतीनामष्टाशीतिर्ग्रहाणां पंक्तयः षट्षष्टिसङ्ख्या भावनीया इति भवति सर्वसङ्ख्यया ग्रहाणां षट्सततं पंक्तिशतम् । एकैका च पंक्तिः षट्षष्टिसंख्याकेति । पुनरुक्तं जीवाभिगमे—"छावट्ठी पिडगाइं, चंदाइच्चाण मणुअलोगम्मि । दो चंदा दो सूरा, य होंति इक्किक्कए पिडए ॥ १ ॥ छावट्ठी पिडगाइं, नक्खत्ताणं तु मणुअलोगम्मि । छप्पण्णं नक्खत्ता, होंति इक्किक्कए पिडए ॥ २ ॥ छावट्ठी पिडगाइं, महग्गहाणं तु मणुअलोगम्मि । छावत्तरं गहसयं, होइ उ इक्किक्कए पिडए ॥ ३ ॥" ' पिटकानि ' इति, अत्र चन्द्रादित्यचतुष्कं सपरिवारं पिटकाकारं पिटकमुच्यते, अयमर्थो हारिभद्र्यां जीवाभिगमलघुवृत्तौ । किंचात्र प्रथमं नक्षत्रगाथा नक्षत्राणां चन्द्रादिभोग्यत्वेनोक्ता, ग्रहा न चन्द्रादिभोग्या इति ज्ञापनाय व्युत्क्रमः ॥६॥ अथैतेषां चन्द्रादीनां भ्रमणस्वरूपमाह—

---

१ 'परमगति' इत्यपि । २ द्वौ चन्द्रमसौ द्वावादित्यौ इत्यर्थः, न तु चन्द्रचतुष्कमादित्यचतुष्कमिति ।

**ते मेरु पडिअडंता, पयाहिणावत्तमंडला सव्वे ।**
**अणवट्ठिअजोगेहिं, चंदा सूरा गहगणा य ॥ ७ ॥**

ते मेरू० । 'ते' पूर्वोक्ता नरलोकवर्त्तिनः सर्वे चन्द्राः सर्वे सूर्याः सर्वे ग्रहगणाः सर्वाणि नक्षत्राणि ध्रुवादिवर्जं सर्वे तारकाश्च जम्बूद्वीपगतममुमेव मेरुमनु—लक्षीकृत्य प्रदक्षिणावर्त्तमण्डलाः सन्तो नित्यमहोरात्रं परिभ्रमन्ति, न तु क्षणमात्रं क्वापि कदापि तिष्ठन्ति । गाथोत्तरार्द्धेन विशेषमाह—'अणवट्ठिअ' त्ति । चन्द्राः सूर्या ग्रहगणाश्च 'अनवस्थितयोगैः' प्रतिदिनं पृथक् पृथक् मण्डलैः परिभ्रमन्ति, तेन चन्द्रादित्यग्रहाणां मण्डलान्यनवस्थितानि, यथायोगमन्यस्मिन्नन्यस्मिन्मण्डले तेषां संचरिष्णुत्वात् । चकारान्नक्षत्रतारकाणां मण्डलान्यवस्थितानि ज्ञेयानि, प्रतिदिनं तेष्वेव निजनिजमण्डलेषु संचरणात् । तथा ध्रुवपार्श्ववर्त्तिनस्तारा ध्रुवमेव परिवर्त्तयन्ति न मेरुम् । ध्रुवाश्चत्वारो जम्बूद्वीपे ज्ञेयाः ; यदुक्तं **"नमिऊण सजल"** अभिधलघुक्षेत्रसमासप्रान्तगाथाया **वृत्तौ श्रीहरिभद्रसूरिभिर्यथा**—" इह मेरोश्चतुर्दिशं चत्वारो ध्रुवतारा मन्तव्याः, तत्परिवारतारकास्तु तेषामेव तारकाणां चतुर्णां समन्तात्परिभ्रमन्ति न तु मेरोः प्रादक्षिण्येन " इति ॥७॥ अथ जम्बूद्वीपे चन्द्रादीनां चारक्षेत्रविष्कम्भमानमाह—

**दीवे असिइसयं जो—अणाण तीसहिअ तिन्नि सय लवणे ।**
**खित्तं पणसयदसहिअ, भागा अडयाल इगसट्ठा ॥ ८ ॥**

दीवे० । 'द्वीपे' जम्बूद्वीपे चन्द्रयोः सूर्ययोश्च 'क्षेत्रं' चारक्षेत्रं विष्कम्भतोऽशीत्यधिकं शतं १८० योजनानाम्, लवणे च त्रिंश-

दधिकानि त्रीणि शतानि योजनानां ३३०, उभयोर्मीलने दशाधिकानि पञ्चशतानि योजनानामष्टचत्वारिंशच्चैकषष्टिभागा योजनस्य ५१० $\frac{48}{61}$। नक्षत्राणामपि चारक्षेत्रमेतदेव, सर्वाभ्यन्तरसर्वबाह्यमण्डलयोः परस्परं दशाधिकपञ्चशतयोजनप्रमाणान्तरालस्योक्तत्वात्। ग्रहाणां तारकाणां च चारक्षेत्रविष्कम्भमानं व्यक्त्या शास्त्रेषु नोपलभ्यत इति ॥ ८ ॥ अथ जम्बूद्वीपे चन्द्रयोः सूर्ययोश्च संख्याज्ञापनपूर्वकं प्रत्येकं कति मण्डलानि भवन्तीत्याह—

**इह दीवे दुन्नि रवी, दुन्नि अ चंदा सया पयासंति।**
**चुलसीसयमेगेसिं, मंडलमन्नेसि पन्नरस ॥ ९ ॥**

इह दिवे०। 'इह' अस्मिन् जम्बूद्वीपे द्वौ सूर्यौ द्वौ च चन्द्रौ सदा प्रकाशयतः। तत्र 'एगेसिं'ति प्रथमोद्दिष्टयो रव्योश्चतुरशीत्यधिकं शतं मण्डलानि भवन्ति। 'अन्नेसिं'ति पश्चादुद्दिष्टयोश्चन्द्रयोः पञ्चदश-संख्याकानि भवन्ति। नक्षत्रमण्डलानि चाष्टौ सन्ति, तत्स्वरूपं नक्षत्राधिकारे भावयिष्यते ॥ ९ ॥ अथ सूर्यमण्डलानां मिथश्चन्द्र-मण्डलानां चान्तराणि कियत्प्रमाणानीत्याह—

**दो जोअणंतराइं, सूराण ससीण पंचतीसा य।**
**तीसमिगसट्ठिभागा, चउरो तस्सत्तभागा य ॥ १० ॥**

दो जोअणं०। सूर्यसम्बन्धिनां मण्डलानामन्तराणि द्वे योजने योजनद्वयप्रमाणानीत्यर्थः, एवंविधान्यन्तराणि सूर्ययोस्त्र्यशीत्यधिकशत-संख्याकानि भवन्ति। चन्द्रमसम्बन्धिनां मण्डलानामन्तराणि पञ्चत्रिंश-द्योजनानि त्रिंशच्चैकयोजनस्यैकषष्टिभागा एकस्यैकषष्टिभागस्य सप्तभागाः

क्रियन्ते तादृशाश्चत्वारो भागाश्च ३५ $\frac{३०}{६१}$ $\frac{४}{७}$, एवंविधान्यन्तराणि चन्द्रयोश्चतुर्दश। तेन जम्बूद्वीपे द्वयोः सूर्ययोश्चन्द्रयोश्च दक्षिणोत्तरायणे कुर्वतोः प्रतिदिनभ्रमिक्षेत्रलक्षणानि निजबिम्बप्रमाणविष्कम्भानि मण्डलानि यथाक्रमं सूर्ययोः १८४ चन्द्रयोः पञ्चदश १५ भवन्ति। तेषां मण्डलानामन्तरालसहितानां विष्कम्भक्षेत्रमानम्–५१० $\frac{४८}{६१}$। तथाहि–सूर्यस्य चतुरशीत्यधिकं शतं मण्डलानाम्, अन्तराणि त्र्यशीत्यधिकं शतम् १८३, एषां विष्कम्भमानं द्वे द्वे योजने, ते च त्र्यशीत्यधिकशतेन गुण्येते जातानि षट्षष्ट्यधिकानि त्रीणि शतानि ३६६। ये च सूर्यसम्बन्धिनोऽष्टचत्वारिंशदेकषष्टिभागाः $\frac{४८}{६१}$ ते चतुरशीत्यधिकेन शतेन गुण्यन्ते जातान्यष्टाशीतिशतानि द्वात्रिंशदधिकानि ८८३२, तेषां योजनानयनार्थं एकषष्ट्या भागे हृते लब्धं चतुश्चत्वारिंशं योजनशतं शेषा अष्टचत्वारिंशच्चैकषष्टिभागा योजनस्य १४४$\frac{४८}{६१}$, एतत्पूर्वराशौ क्षिप्तं जातं च यथोक्तमानम् ५१०$\frac{४८}{६१}$। चन्द्रस्य तु मण्डलविष्कम्भः षट्पञ्चाशदेकषष्टिः भागा योजनस्य, ते $\frac{५६}{६१}$ पञ्चदशगुणिता जाताः ८४०, तेषां योजनानयनार्थमेकषष्टिभागहरणे लब्धाः १३ शेषाः ४७ स्थिताः। मण्डलान्तराणां च प्रत्येकं विष्कम्भमानं पञ्चत्रिंशद्योजनानि त्रिंशदेकषष्टिभागा योजनस्यैकस्यैकषष्टिभागस्य च सप्तधा छिन्नस्य चत्वारो भागाः ३५ $\frac{३०}{६१}$ $\frac{४}{७}$, पञ्चत्रिंशच्चतुर्दशगुणिता जातानि ४९० योजनानि, त्रिंशद्भागाश्चतुर्दशगुणिता जाताः ४२०, सप्तधा छिन्नस्य चत्वारो भागाश्चतुर्दशगुणिता जाताः षट्पञ्चाशत्, ते सप्तभिर्हृता लब्धा अष्टावेकषष्टिभागाः, ते च चतुश्शतविंशतौ क्षिप्ता जाताः ४२८ ते एकषष्ट्या हृता लब्धानि योजनानि सप्त शेष एक एकषष्टिभागः

स्थित ७ $\frac{१}{६१}$, पूर्वोक्तानि योजनानि १२ तथा ४९० तथा ७, सर्वेषां मीलने जातानि योजनानि ५१०, शेषभागा १ तथा ४७, उभयो मीलने $\frac{४}{६१}$ स्थिता इति । इद चारक्षेत्रचक्रवालविष्कम्भमानम् ॥१०॥
अथ कति मण्डलानि द्वीपे कति च निषधे लवणे च कति सूर्यचन्द्रयोर्भवन्तीति गाथाद्वयेनाह —

**संततमंतरमेअं, रवीण पणसट्ठिमंडला दीवे ।**
**तत्थ विसट्ठी निसढे, तिन्नि अ बाहाइ तस्सेव ॥ ११ ॥**
**चंदाणं निसढे वि अ, मंडल पण गुरुगएसि दीसंति ।**
**सेसाइं मंडलाइं, दोण्ह वि जलहिस्स मज्झम्मि ॥१२॥**

सतत० । 'सतत' सर्वदाऽऽ 'एतत्' पूर्वोक्तं सूर्ययोश्चन्द्रयोश्च मध्ये प्रविशतोर्बहिर्निर्गच्छतोश्च मण्डलाना परस्परमन्तरं ज्ञेयम् । तत्र रव्योः पञ्चषष्टिमण्डलानि जम्बूद्वीपे । तत्रापि द्वाषष्टिर्निषधपर्वते त्रीणि च तस्य बाहायाम्, इद तु श्रीमुनिचन्द्रसूरिभिरुक्तम् । **समवायाङ्ग-वृत्तौ त्रिषष्टिस्थाने**—"जम्बूद्वीपस्य पर्यन्तिमेऽशीत्युत्तरे योजनशते पञ्च-षष्टिर्भवन्ति, तत्र निषधपर्वते नीलवत्पर्वते च त्रिषष्टिः सूर्योदया सूर्य-मण्डलानीत्यर्थं, तदन्ये तु द्वे जगत्या, शेषाणि तु लवणे' इत्युक्तमस्ति । **मण्डलवृत्तावपि**—"त्रिषष्टित्रिषष्टिमण्डलानि निषधनीलवतो, द्वे द्वे हरिवर्षरम्यकयोः । ' तत्तत्त्व सर्वविद्वेद्यम् ॥ ११ ॥ तथा—चदा० । चन्द्रयोर्निषधनीलवन्तपर्वत एव पञ्च मण्डलानि गुरूपदेशे दृश्यन्ते, शेषाणि मण्डलानि द्वयोरपि जलधौ ११० सूर्यस्य दश १० चन्द्रस्य च भवन्ति । तत्राप्यय विशेष —१–२–३–४–५–११–१२–१३–१४–१५ एतानि चन्द्रमण्डलानि सूर्यस्यापि साधारणानि । षट् ६–

सप्तम ७ अष्टम ८ नवम ९ दशम १० रूपाणि पुनश्चन्द्रस्यैव भवन्ति, न जातुचिदपि तेषु सूर्यः समायाति । चन्द्रस्य १५ मण्डलानामन्तराणि चतुर्दश भवन्ति । तत्र चतुर्षु सर्वाभ्यन्तरेषु चतुर्षु सर्वबाह्यमण्डलान्तरेषु च सूर्यस्य प्रत्येकं द्वादश मण्डलानि भवन्ति । मध्यवर्तिषु षट्सु चन्द्रमण्डलान्तरेषु सूर्यमण्डलानि त्रयोदश त्रयोदश भवन्ति ॥ १२ ॥ अथ मण्डलनिष्पत्तिस्वरूपमाह—

**रविदुगभमणवसाओ, निप्फज्जइ मंडलं इहं एगं ।**
**तं पुण मंडलसरिसं, ति मंडलं वुच्चइ तहाहि ॥ १३ ॥**

रविदु० । रविद्विकभ्रमणवशान्निष्पद्यते मण्डलमिहैकम् । तत्पुनर्वृत्ताकारतया मण्डलसदृशमिति हेतोर्व्यवहारेण मण्डलमुच्यते न तु निश्चयेन । तथाहीति साक्षाद्दर्शने ॥ १३ ॥ तमेवार्थं गाथाद्वयेनाह—

**गिरिनिसढनीलवंतेसु उग्गयाणं रवीण कक्कम्मि ।**
**पढमाउ चेव समया, ओसरणेणं जओ भमणं ॥ १४ ॥**
**तो नो निच्छयरूवं, निप्फज्जइ मंडलं दिणयराणं ।**
**चंदाण वि एवं चिअ, निच्छयओ मंडलाभावो ॥ १५ ॥**

गिरिनि० । निषधनीलवन्नाम्नोर्गिर्योरुपर्युद्गतयो रव्योः 'कर्के' कर्कसंक्रान्तिप्रथमदिने प्रथमसमयादेवारभ्य शनैश्शनैरपसरणेन यतः कारणाद्भ्रमणम् ॥ १४ ॥ तो नो० । 'तो' इति ततः कारणात् 'निश्चयरूपं मण्डलं न निष्पद्यते' परिपूर्णवृत्ताकारतया मण्डलनिष्पत्तिर्निश्चयतो दिनकरयोर्न भवतीत्यर्थः । चन्द्रयोरप्येवमेव निश्चयतो मण्डला-

भावन्त्यैव वक्रतया परिभ्रमणात् ॥ १९ ॥ अथ चन्द्रसूर्ययोर्मण्डल-स्थानादूर्ध्वमधश्च संक्रमणनिषेधमाह—

**रयणिअरदिणयराणं, उड्ढे अ अहे अ संकमो नत्थि ।**
**मंडलसंकमणं पुण, सब्भंतरबाहिरं तिरिअं ॥ १६ ॥**

रयणिअर० । 'रजनिकरदिनकरयोः' चन्द्रादित्ययोः समभूतला-दशीत्यधिकाष्टाशतयोजनेभ्यश्चन्द्रस्य परिपूर्णाष्टशतयोजनेभ्यः सूर्यस्य च 'उड्ढे' ऊर्ध्वदेशे 'संक्रमः' सञ्चरणम् । तथा पूर्वोक्तयोजनेभ्योऽधश्च संक्रमो नास्ति, तथाजगत्स्वाभाव्यात् । तिर्यक्पुनर्मण्डलेषु संक्रमणं भवेत्, किंविशिष्टमित्याह—'साभ्यन्तरबाह्यं' सहाभ्यन्तरं बाह्यं यस्य येन वा तत्साभ्यन्तरबाह्यम्, किमुक्तंभवति—सर्वाभ्यन्तरान्मण्डलात्परत-स्तावन्मण्डलेषु संक्रमणं यावत्सर्वबाह्यमण्डलम्, सर्वबाह्याच्च मण्डला-दर्वाक् मण्डलेषु तावत्संक्रमणं यावत्सर्वाभ्यन्तरमिति । इदं विमाना पेक्षं न तु तन्मध्यवर्तिसुरापेक्षम्, ते तु नन्दीश्वरद्वीपभगवत्समवसर-णादिष्वायान्ति ॥ १६ ॥ अथ चन्द्रयोः सूर्ययोश्च सर्वमण्डलस्थयोर्मिथो विष्कम्भान्तरमाह—

**ससिससि रविरवि अंतर, मज्झे इगलक्ख तिसयसट्ठूणो ।**
**साहिअदुसयरिपण चय, बहि लक्खो छसयसट्ठहिओ ॥१७॥**

ससि० । 'मध्ये' इति सर्वाभ्यन्तरे मण्डले वर्तमानयोः शशि-नोः समश्रेण्या परस्परमन्तरं जम्बूद्वीपेऽशीत्यधिके शते योजनानां मध्ये प्रवेशात् षष्टयधिकशतत्रययोजनोनं लक्षम्, अङ्कतो यथा—९९६४० । तत्परिधिः योजनानि ३१५०८९ किञ्चिदधिकानि, यत ९९६४०

अङ्कानां वर्गकरणे दशगुणे च ९९२८१२९६००० एतदङ्कानां करणीकरणे सर्वाभ्यन्तरमण्डलस्य परिधिः ३१५०८९ भवति । ततो द्वितीयादिचन्द्रमण्डलेषु विष्कम्भस्य 'चय' इति वृद्धिर्योजनानां द्वासप्ततिरेकपञ्चाशदेकषष्टिभागास्तत्सप्तिकश्चैकभागोऽपि, यथा–योजनानि ७२$\frac{५१}{६१}$ $\frac{१}{७}$, एतद्राशेः परिधिर्योजनानि २३०$\frac{१४३}{४२७}$, यतो द्विसप्ततियोजनान्येकषष्ट्या गुण्यन्ते ४३९२, एकपञ्चाशति क्षिप्ते जातं ४४४३, तच्च सप्तगुणितमेकेन युतं ३११०२, तच्च वर्गितं दशगुणितं च यथा– ९६७३२४४०४०, एतस्य करणीकरणे आगतं ९८३५२, शेषाङ्काः ३१४३१ स्थितास्तैर्न किञ्चित्प्रयोजनम् । तत एकषष्टिः सप्तगुणिता जाताः ४२७ तैः *कृत्वा लब्धानां* भागहारे योजनानि २३०$\frac{१४३}{४२७}$ । अयं परिरयो यदि चन्द्रस्य प्रथमादिमण्डलपरिरये क्षिप्यते तदा यथोत्तरं द्वितीयादिमण्डलपरिरयमागच्छति । विष्कम्भवृद्ध्यानयनोपायश्चायम्—चन्द्रमण्डलान्तरं पञ्चत्रिंशद्योजनानि त्रिंशदेकषष्टिभागाश्चत्वारश्च सप्तिका भागा इति, अत्र द्वयोः पार्श्वयोरपेक्षया योजनानां द्विगुणने[1] सप्ततियोजनानि ७०, तथा त्रिंशद्भागानां द्विगुणत्वे षष्टिरेकषष्टिभागाः, तथा सप्तिकाश्चत्वारो भागास्ते द्विगुणिता अष्टौ, तैः सप्तभिरे (क ए) कषष्टिभागः, सर्वे एकषष्टिस्तैरेकं योजनम्, तच्च योजनराशिमध्ये क्षिप्तमेकसप्ततिः, सप्तिकश्चैकभागः स्थितः । चन्द्रविमानं तु षट्पञ्चाशद्भागमितम्, तद्द्विगुणत्वे द्वादशोत्तरं शतं ११२, एकषष्ट्या भागेरेकं योजनं शेषा एकपञ्चाशद्भागाः, तद्योजनमेकसप्ततौ क्षिप्तं जातं पूर्वोक्तमानम् ७२ $\frac{५१}{६१}$ $\frac{१}{७}$ । एतच्चतुर्दशगुणितं जातमेकोनविंशत्युत्तरं सहस्रं

[1] "द्विगुणिते" इत्यपि ।

योजनाना १०१९ शेषा भागा ४५/६१, तत्र यदा चन्द्रप्रथममण्डलविष्कम्भे ९९६४० योजनरूपे क्षिप्यन्ते तदा सर्वबाह्ये मण्डले द्वयोश्चन्द्रयोर्मिथोऽन्तर योजनानि १००६५९४५/६१। तत्परिधियोजनानि ३१८३१९ किञ्चिदूनानि ॥ तथा सर्वाभ्यन्तरे मण्डले द्वयो सूर्ययोर्मिथोऽन्तर योजनानि ९९६४०, तत्परिधियोजनानि ३१५०८९ किञ्चिदधिकानि। द्वितीयादिसूर्यमण्डलेषु प्रतिमण्डले विष्कम्भवृद्धिर्योजनानि ५३५/६१। तत्परिधियोजनानि १७३८/६१, यत पञ्च एकषष्ट्या गुणिता पञ्चत्रिंशत्सहिताश्च ३४०, ते वर्गिता दशगुणिताश्च जाता ११५६०००, एतद्राना वर्गमूलकरणे १०७५ आगता, शेषा ३७५ स्थिता, आगतानां ६१ भागहरणे १७३८/६१। अथ परिरयो यदि सूर्यस्य प्रथमादिमण्डलपरिरये क्षिप्यते तदा द्वितीयादिसूर्यमण्डलपरिधिप्रमाणमागच्छति। अत्रापि विष्कम्भवृद्ध्यानयनोपायो यथा—सूर्यस्य मण्डलान्तर योजने द्वे, तद्द्विगुणत्वे चत्वारि, सूर्यविमान त्वष्टचत्वारिंशद्भागमितम्, तद्द्विगुण षण्णवतिर्भागा, तेषामेकषष्ट्या भागैरेक योजन, तच्चतुर्षु क्षिप्त जात योजनपञ्चक शेषा पञ्चत्रिंशद्भागा ५३५/६१, एतच्च त्र्यशीत्यधिकशतेन गुण्यते जात योजनाना विंशत्युत्तर सहस्रम् १०२०, तच्च सर्वाभ्यन्तरमण्डलविष्कम्भे ९९६४० रूपे मील्यते तदा सर्वबाह्ये मण्डले द्वयो सूर्ययोर्मिथोऽन्तर १००६६० भवति। तत्परिधियोजनानि ३१८३१५। चन्द्रयोरिव सर्वाभ्यन्तरे सर्वबाह्ये च मण्डले सूर्ययोरप्यबाधाप्रमाणमवसेयम्। नवर चन्द्रस्य सूर्यापेक्षया षोडशभिरेकषष्टिभागैर्न्यूनमन्तरम्, यत एकोऽपि चन्द्रोऽष्टाचत्वारिंशत्षष्टिभागान् सूर्यादभ्यन्तरमाक्रामति, एवमपरोऽपि तन्मतश्रेणिस्थ, तत षोडशभि

भागैर्न्यूनना ॥ १७ ॥ अथ सर्वाभ्यन्तरपरिधिं सर्वबाह्यपरिधिं च वृत्तानुक्रमपि सूत्रमध्ये गाथाद्वयेनाह—

**तिन्नेव सयसहस्सा, पन्नरस हवंति जोअणसहस्सा ।**
**एगुणनउआ परिही, अब्भंतरमंडले तेसिं ॥ १८ ॥**
**लक्खतिगं अट्ठारससहस्सा, तिन्नि सय पंचदसअहिआ ।**
**परिहीइ जोअणाइं, बाहिरए मंडले हुंति ॥ १९ ॥**

तिन्नेव० । त्रीणि लक्षाणि पञ्चदशसहस्राणि एकोननवत्यधिकानि ३१५०८९ योजनाना सर्वाभ्यन्तरे मण्डले परिधि 'तयो' चन्द्रयोः सूर्ययोश्च ॥ १८ ॥ लक्ख० । लक्षत्रिकमष्टादशसहस्राणि पञ्चदशाधिकानि त्रीणि शतानि योजनाना ३१८३१५ सर्वबाह्ये मण्डले परिधिरिति ॥१९॥ अथ चन्द्रस्य सर्वमण्डलेषु प्रतिमुहूर्त्त गतिप्रमाणमाह—

**साहिअपणसहसतिहुत्तराइं, ससिणो मुहुत्त गइ मज्झे ।**
**बावन्नहिआ सा बहि, पइमंडल पउणचउवुड्ढी ॥ २० ॥**

साहि० । 'मज्झे' इति सर्वाभ्यन्तरे मण्डले वर्तमानस्य जम्बूद्वीपे एकैकस्मिन्मुहूर्ते पञ्चसहस्राणि त्रिसप्तत्यधिकानि साधिकानि योजनाना गतिर्भवति, अङ्कतो यथा—५०७३$\frac{७७४४}{१३७२५}$ । 'सेव' सर्वाभ्यन्तरमण्डलगतिर्द्विपञ्चाशद्योजनाधिका कृता सती सर्वबहिर्मण्डले चन्द्रस्यैकैकमुहूर्त्तगतिर्जायते, अत्र वियद्भागानां न्यूनत्व जातम्, अङ्कतो यथा—५१२५$\frac{६९९०}{१३७२५}$ । प्रतिमण्डल च किञ्चिदूनपादोनचतुर्योजनवृद्धि क्रियते एतावता पूर्ण योजनत्रिक पञ्चपञ्चाशदधिक षण्णवतिशतभागाश्चेत्यर्थ ३$\frac{९५५}{१३७२५}$ । एतच्चतुर्दशगुणित द्वापञ्चाशत ॥ २० ॥ अथ सूर्यस्य सर्वमण्डलेषु प्रतिमुहूर्त्तं गतिप्रमाणमाह—

मज्झे दुरहिगमम्मा, सया य चउदरुसमजुया बाहिं ।
सूरस्स य अट्टारस, सट्ठीभागाणमिह वुड्ढी ॥ २१ ॥

मज्झि० । सर्वमध्यमण्डले वर्तमानस्य जम्बूद्वीपसत्कसूर्यस्य तु द्विपञ्चाशच्छतान्येकपञ्चाशदधिकानि योजनानामिति योग, एकैकस्मिन्मुहूर्ते गतिर्गेतावती भवति ५२५१ $\frac{२९}{६०}$, ये चोपरितनाशा सूत्रे स्तो उक्ताशोक्तास्ते चन्द्रसूर्ययोर्मुहूर्तगतिनामनि चिन्तयिष्यन्ते । या च सर्वमध्यमण्डले मुहूर्तगति सूर्यस्य सैव चतुष्पञ्चाशद्योजनयुता सती सर्वबाह्यमण्डले प्रतिमुहूर्तं गतिर्जायते, यथा—५३०५ $\frac{१५}{६०}$ । अत्र प्रतिमण्डल किञ्चिदूनानामष्टादशषष्टिभागाना $\frac{१८}{६०}$ वृद्धि, यतोऽष्टादशाना त्र्यशीत्यधिकशतगुणने ३२९४ जायन्ते, तेषा षष्ट्या भागहारे लब्धानि चतुष्पञ्चाशद्योजनानीति ॥ २१ ॥ अथाधिकागतनक्षत्राणा प्रतिमुहूर्तं गतिप्रमाणमाह—

पणसहसदुसयसाहिअ, पणसट्ठी जोअणाण मज्झि गई ।
चउपन्नहिया सा बहिमंडलए होइ रिक्खाणं ॥ २२ ॥

पणस० । 'मज्झि' त्ति सर्वाभ्यन्तरे मण्डले वर्तमानाना नक्षत्राणा मेकैकमुहूर्ते गति पञ्चसहस्राणि द्वे शते पञ्चषष्टिश्च साधिका योजनाना ५२६५ $\frac{१८२६३}{२१९६०}$ । सा च सर्वाभ्यन्तरमण्डलगतिश्चतुष्पञ्चाशद्योजनाधिका क्रियते तदा सर्वबाह्ये मण्डले वर्तमानाना नक्षत्राणा प्रतिमुहूर्तं गति यथा—५३१९ $\frac{१६३६८}{२१९६०}$ । अत्र प्रतिमण्डलवृद्धि सम्यग् न ज्ञायते, यतो मण्डलानामन्तर सर्वत्र तुल्य नास्ति ॥ २२ ॥ अथ मण्डलभ्रमिमुहूर्तज्ञापनपूर्वक पूर्वोक्तमपि चन्द्रादिमुहूर्तगतिपरिमाण कर-णगाथाभिर्विवरीषु प्रथम चन्द्रस्याह—

**बावट्ठि पुएणरूवा, तेवीसं अंसगा य बोधव्वा ।**
**दो चेव इकवीसा, छेओ पुण तेसि बोधव्वो ॥ २३ ॥**

चावट्ठि० । चन्द्रस्यैकैकमण्डले भ्रमिकालः 'द्वाषष्टिः पूर्णरूपाणि' पूर्णा द्वाषष्टिर्मुहूर्ता इत्यर्थः, त्रयोविंशतिरंशाश्चैकस्य मुहूर्तस्यैकविंशत्यधिकशतद्वयभागरूपा बोद्धव्याः ६२$\frac{२३}{२२१}$, एतावत्कालप्रमाणं चन्द्रस्यैकैकमण्डले परिभ्रमतो लगति । अत्रांशस्वरूपं सूत्रेणैवाह—'छेओ 'त्ति छेदो—विभजनाङ्कः पुनः 'तेषां' मुहूर्तानामेकविंशत्यधिकशतद्वयरूपो बोद्धव्यः ॥ २३ ॥

**एएण य भइअव्वो, मंडलरासी हविज्ज जं लद्धं ।**
**सा सोमसुहुत्तगई, तहिं तहिं मंडले निअमा ॥ २४ ॥**

एएण० । 'एतेन च' अनन्तरोक्तराशिना द्वाषष्टिमुहूर्तादिरूपेण मण्डलपरिधिराशिर्भक्तव्यः, भक्ते सति भवेद्यल्लब्धं सा सोमस्यैकैकमुहूर्ते गतिर्भवति तस्मिन् तस्मिन् मण्डले नियमात् । भावना यथा—सवर्णनार्थं द्वाषष्टिमुहूर्ता एकविंशत्यधिकशतद्वयगुणाः क्रियन्ते, जातं १३७०२, उपरितनांशास्त्रयोविंशतिः क्षिप्यन्ते जातानि त्रयोदशसहस्राणि पञ्चविंशत्यधिकानि सप्तशतानि १३७२५, चन्द्रस्य सर्वाभ्यन्तरमण्डलपरिधिर्योजनानि ३१५०८९ रूप, सोऽपि २२१ गुणः क्रियते जातं षट्को नवकः षट्कस्त्रिकश्चतुष्कः षट्कः षट्को नवकश्चेति ६९६३४६६९, अस्य राशेः पूर्वोक्तेन त्रयोदशसहस्रपञ्चविंशत्यधिकसप्तशतप्रमिताङ्केन १३७२५ भागहारे लब्धानि योजनानि ५०७३ अंशाः $\frac{७७४४}{१३७२५}$, एषा चन्द्रस्याभ्यन्तरमण्टले मुहूर्तगतिः । द्वितीये

चन्द्रमण्डले परिधियोजनानि ३१५३१९, सोऽपि २२१ गुणितो जातः षट्को नवकः षट्कोऽष्टकः पञ्चकश्चतुष्को नवको नवकश्चेति ६९६८५४९९, अस्य राशेः पूर्वोक्तेन १३७२५ राशिना भागे लब्धानि योजनानि ५०७७ $\frac{३५७४}{१३७२५}$, एषा द्वितीये मण्डले चन्द्रस्यैकमुहूर्त्त गतिः। एवं मण्डले मण्डले परिधिवृद्ध्या पूर्वपूर्वापेक्षया मुहूर्त्तगतिप्रमाणं प्रतिमण्डलं किञ्चिदूनपादोनचतुर्योजनवृद्ध्या तावन्नेयं यावत्सर्वबाह्यं मण्डलम्। तत्र च परिधियोजनानि ३१८३१५, अयमपि २२१ गुणितो जातः सप्तकः शून्यं त्रिकश्चतुष्कः सप्तकः षट्क एककः पञ्चकश्चेति ७०३४७६१५, अस्य राशेः १३७२५ भागे लब्धानि योजनानि ५१२५ $\frac{६९९०}{१३७२५}$, एतावती सर्वबाह्ये मण्डले चन्द्रस्य प्रतिमुहूर्त्तं गतिः ॥ २४ ॥ अथ सूर्यस्य मुहूर्त्तगतिकरणमाह—

**मंडलपरिरयरासी, सट्ठी भइअम्मि होइ जं लद्धं।**
**सा सूरमुहुत्तगई, तहिं तहिं मंडले निअमा ॥ २५ ॥**

मंडलपरि०। सूर्यस्य मण्डलपरिधिराशिः षष्ट्या ६० भज्यते, भक्ते सति यल्लब्धं भवति सा सूर्यस्यैकमुहूर्त्तगतिर्भवति तत्र तत्र मण्डले नियमात्। अत्र मण्डलपरिरयराशेः षष्ट्या भागकथनान्मण्डलभ्रमिकालस्य षष्टिमुहूर्तप्रमाणता ज्ञेया। भावना यथा—सूर्यस्य सर्वाभ्यन्तरे मण्डले परिधिः ३१५०८९, तस्य मण्डलभ्रमिमुहूर्ताङ्केन षष्ट्या ६० भागे लब्धानि ५२५१ $\frac{२९}{६०}$, एषा सर्वाभ्यन्तरे मण्डले सूर्यस्य प्रतिमुहूर्त्तं गतिः। पूर्वपरिधौ सतद्भागप्रक्षेपेऽन्ते षट्कः समायाति, तेन पञ्चत्रिंशत्षष्टिभागानां परिधिराशिन्यायाश्च संस्थाने एकं योजनं भवति, तत्र-

क्षेपे सतत्र स्याद्, एवमन्यत्रापि योज्यम्, ततो द्वितीयमण्डले परिधि ३१५१०७, तस्य षष्ट्या भागे लब्धानि योजनानि ५२५१ $\frac{४७}{६०}$, एषा द्वितीयमण्डले सूर्यस्य प्रतिमुहूर्तं गति । एव सर्वाभ्यन्तराद्बहिर्निष्क्रामत सूर्यस्य मण्डले मण्डले पूर्वपूर्वानन्तरमुहूर्तगतिप्रमाणापेक्षया किञ्चिदूना अष्टादश षष्टिभागा प्रवर्धमानास्तावद्वक्तव्या यावत्सर्वबाह्यमण्डलम् । तत्र परिधि ३१८३१५, तस्य षष्ट्या भागे लब्धानि योजनानि ५३०५ $\frac{१५}{६०}$, एतावती सर्वबाह्ये मण्डले सूर्यस्य प्रतिमुहूर्तं गति । यथा यथा बहिर्निष्क्रामतोश्चन्द्रसूर्ययोर्गतिर्विवर्धते तथा तथा मध्ये प्रविशतोस्तेनैव प्रकारेण हीयत इत्यवसेयम् ॥ २५ ॥ अथ सर्वनक्षत्राणां गाथाद्वयेन मुहूर्तगतिकरणमाह—

**एगूणसट्ठिरूवा, सत्तहिं अहिगा उ तिन्नि अंससया ।**
**तिन्नेव य सत्तट्ठा, छेओ पुण तेसि बोधव्वो ॥ २६ ॥**
**एएण य भइअव्वो, मंडलरासी हविज्ज जं लद्धं ।**
**सा होइ मुहुत्तगई, रिक्खाणं मंडले नियमा ॥ २७ ॥**

एगूणस० । नक्षत्राणा मण्डलभ्रमिकाल 'एकोनषष्टिरूपाणि' पूर्णा एकोनषष्टिमुहूर्ता इत्यर्थ, सप्ताधिकानि पुनस्त्रीण्यंशशतानि एकस्य मुहूर्तस्य सप्तषष्ट्यधिकशतत्रयभागरूपाणि ५९$\frac{३०७}{३६७}$, इयता कालेन नक्षत्र स्व स्व मण्डल भ्रम्या पूरयति । अंशस्वरूप सूत्रेणैवाह—छेद पुन 'तेषा' मुहूर्ताना सप्तषष्ट्यधिकानि त्रीण्येव शतानि बोद्धव्य ॥२६॥ एए० । 'एतेन च' अनन्तरोक्तराशिनैकोनषष्टिमुहूर्तादिरूपेण नक्षत्रमण्डलराशिर्भक्तव्य, तत्करणे यल्लब्ध सा भवति प्रतिमुहूर्तं गतिर्नक्षत्राणा मण्डले मण्डले नियमात् । भावना यथा—एकोनषष्टिर्मुहूर्ता

करणार्थं सप्तषष्ट्यधिकशतत्रयगुणा क्रियन्ते जात २१६२३, उपरितनानामंशाना च क्षेपे जातान्येकविंशतिसहस्राणि नवशतानि षष्ट्यधिकानि २१९६०, सर्वाभ्यन्तरे नक्षत्रमण्डले परिधि ३१५०८९, स च ३६७ गुण क्रियते—एकक एकक पञ्चक षट्कस्त्रिक सप्तक षट्क पञ्चस्त्रिकश्चेति ११५६३७६६३, अस्य पूर्वेण २१९६० भागे लब्धानि योजनानि पञ्चसहस्राणि पञ्चषष्ट्यधिके द्वे च शते एतस्य योजनस्य चैकविंशतिसहस्राणि षष्ट्यधिकानि नवशतानि भागा क्रियन्ते तत्सन्धिनोऽष्टादशसहस्राणि त्रिषष्ट्यधिके द्वे च शते भागा ५२६५ $\frac{१८२६३}{२१९६०}$, एतावती प्रतिमुहूर्तं सर्वाभ्यन्तरे मण्डले वर्तमानाना मभिजिदादिद्वादशनक्षत्राणा गति। एव तृतीयादिचन्द्रमण्डलाना परिधिप्रमाण परिभाव्य तत्तन्मण्डलस्थशेषनक्षत्राणामपि प्रतिमुहूर्तं गति प्रमाणमवसातव्यम्, यत प्रथमे चन्द्रमण्डलेऽभिजित् १ श्रवण २ धनिष्ठा ३ शतताग्का ४ पूर्वभाद्रपद ५ उत्तरभाद्रपद ६ रेवती ७ अश्विनी ८ भरणी ९ पूर्वफाल्गुनी १० उत्तरफाल्गुनी ११ स्वाति १२ नक्षत्राणि भवन्ति १, तृतीये चन्द्रमण्डले पुनर्वसु १ मघा २- द्वे नक्षत्रे २, षष्ठे चन्द्रमण्डले कृत्तिका ३, सप्तमे चन्द्रमण्डले रोहिणीचित्रे द्वे ४, अष्टमे चन्द्रमण्डले विशाखा ५, दशमे चन्द्र- मण्डले अनुराधा ६, एकादशमे चन्द्रमण्डले ज्येष्ठा ७, पञ्चदशे चन्द्रमण्डले मृगशीर्ष १ आर्द्रा २ पुष्य ३ अश्लेषा ४ हस्त ५ मूल ६ पूर्वाषाढा ७ उत्तराषाढा ८ अष्टौ सन्ति, शेषेषु द्वितीयचतुर्थ पञ्चनवमद्वादशत्रयोदशचतुर्दशसङ्ख्येषु सप्तसु चन्द्रमण्डलेषु नक्षत्राणि न सन्ति। तत्रान्तिमे नक्षत्रमण्डले परिधि ३१८३१५, एतोऽपि

२६७ गुणो जात–एकक एकक षट्कोऽष्टको द्विक एकक षट्क शून्य पञ्चकश्चेति ११६८२१६०५, अस्य पूर्वोक्तेन २१९६० भागे लब्धानि योजनानि–५३१९ $\frac{१३६५}{२१९६०}$, एषा बाह्ये मण्डले मृगशिर प्रभृतीनामष्टाना नक्षत्राणा प्रतिमुहूर्तं गति । ग्रहाणा तारकाणा च मण्डलमानभ्रमिकालमानमुहूर्तगतिमानादिक वार्त्तमानिकशास्त्रेषु न दृश्यते । किञ्च चन्द्र साधिकैर्द्वाषष्ट्या मुहूर्तैर्मण्डल पूरयति, सूर्योऽपि षष्ट्या मुहूर्तैर्मण्डल पूरयति, नक्षत्र साधिकैरेकोनषष्ट्या मुहूर्तैर्मण्डल भ्रमणेन पूरयति । ततश्चन्द्रेभ्य सूर्या शीघ्रगतय, तेभ्यो नक्षत्राणि शीघ्रगतीनि । ग्रहास्तु वक्रातीचारमन्दगतितो न नियतगतयस्तेन न तेषा गतिप्ररूपणोक्ता । यत –“ चदेहि सिग्घयरा, सूरा सूरेहिं हुति णक्खत्ता । अणिअयगइपत्थाणा, हवति सेसा गहा सव्वे ॥ १ ॥ ” ॥ २७ ॥ अथ सर्वाभ्यन्तरे मण्डले वर्तमाने सूर्ये उदयास्तान्तर दिनमान चाह—

**मज्झे उदयत्थंतर, चउणवइसहस्सपणसयछवीसा ।**
**बायाल सट्ठिभागा, दिणं च (त) अट्ठारसमुहुत्तं ॥ २८ ॥**

मज्झे० । सर्वाभ्यन्तरे मण्डले वर्तमानस्य सूर्यस्य पर्यायदिने उदयास्तान्तर चतुर्णवतिसहस्राणि पञ्चशतानि षड्विंशत्यधिकानि योजनाना द्विचत्वारिंशत्षष्टिभागाश्च ९४५२६$\frac{४२}{६०}$ । ‘तदा’ तस्मिन्दिनेऽष्टादशमुहूर्तं दिनमान भवतीतिशेष ॥ २८ ॥ अथ प्रतिमण्डल कियद्दिनमान हीयते ? सर्वबाह्ये मण्डले च गते सूर्ये कियद्दिनमान सावशेष तिष्ठति ? इत्याह—

**पइमंडल दिणहाणी, दुण्ह मुहुत्तेगसट्ठिभागाणं ।**
**अंते बार मुहुत्तं, दिणं निसा तस्स विवरीया ॥ २९ ॥**

पइ० । प्रतिमण्डल द्वयोर्मुहूर्तैकषष्टिभागयोर्दिनस्य हानिर्भवति । अयमर्थ—एकस्य मुहूर्तस्यैकषष्टिभागा क्रियन्ते तत्सम्बन्धिनौ द्वौ भागौ हीयेते । 'अते' इति सर्वबाह्यमण्डले वर्तमाने सूर्ये द्वादशमुहूर्त दिन भवति । अत्र त्रैराशिककरण ज्ञेयम्—यद्यशीत्यधिकशतदिनै षण्मुहूर्ताना हानिस्तदैकेन दिनेन का हानि ? इति, राशित्रयन्यासो यथा—१८३—६—१ मध्योऽन्त्यगुण क्रियते, एकेन गुणित तदेव भवति जाता षट्, आदिना च भागाप्राप्तौ एकषष्टिगुणा क्रियन्ते जाता ३६६, ते त्र्यशीत्यधिकशतेन भज्यन्ते लब्धौ द्वौ मुहूर्तैकषष्टि भागौ $\frac{2}{61}$, एतौ कर्कप्रभृति प्रतिदिन हीयेते, मकरप्रभृति प्रतिदिन वर्धेते । यच्च भगवत्यामेकादशे शत एकादशोद्देशके—एकस्य मुहूर्तस्य द्वाविंशत्यधिक शत भागा क्रियन्ते तादृशाश्चत्वारो भागा हानौ वृद्धौ चोक्ता, अत्रैकषष्टिको द्वौ भागौ, उभयोर्नार्थभेद । एतावता किञ्चिदून पलचतुष्क जात यथा पलानि ३ अक्षराणि ०८ एकाक्षरस्य भागा $\frac{12}{183}$, यत १८३ दिनै षण्मुहूर्ता वर्धन्ते प्रतिमुहूर्त पलानि १२०, तानि च षड्गुणानि ७२०, तानि त्र्यशीत्यधिकशतेन भज्यन्ते लब्धानि त्रीणि ३ पलानि, शेष १७१, तानि भागाप्राप्तौ षष्ट्यक्षर गुणितानि १०२६०, तेऽङ्का १८३ भक्ता लब्धा ०६ वर्णा, शेषा एकस्याक्षरस्य द्वादश भागाश्च $\frac{12}{183}$ । तथा 'निसा तस्स विवरीअ' त्ति निशा—रात्रिर्दिनाद्विपरीता ज्ञेया, कोऽर्थ ? यदा दिनमानमष्टादशमुहूर्त तदा निशा द्वादशमुहूर्ता, यदा दिन द्वादशमुहूर्त तदा निशाष्टादश-मुहूर्ता । अत्रापि हानिवृद्धी निवज्ञेये ॥ २९ ॥ अथ सर्वबाह्ये मण्डले तथा प्रथमवर्जसर्वमण्डलेषु सूर्ययोर्य्याप्तान्तरयोजनसङ्ख्यामाह—

**उदयत्थंतर बाहिं, सहसा तेसट्ठि छसय तेसट्ठा ।**
**तह इगससिपरिवारे, रिक्खडवीसाडसीइ गहा ॥ ३० ॥**

उद० । 'बाहिं' इति सर्वबाह्ये मण्डले सूर्यस्योदयास्तान्तर त्रिष ष्टिसहस्राणि षट्शतानि त्रिषष्ट्यधिकानि योजनाना ६३६६३ । अत्र सूत्रेऽनुक्तापि द्वात्रिंशत्तमगाथावृत्तौ करणेन वक्ष्यमाणा प्रथममण्डला पेक्षया प्रतिदिनमुदयास्तान्तरहानि साधिक द्विसप्ततिशत योजनाना १७२३$\frac{७}{६०}$ $\frac{४४}{६१}$ । पूर्वपश्चिमयोश्च तदर्धं साधिका षडशीतिर्योजनाना ज्ञेया । सर्वत्र दिनार्धयोजनै सूर्य उदयास्तमनयोर्दृश्यत इति गाथा-पूर्वार्द्धे । 'तह इग' त्ति । तथैकस्य शशिन परिवारे ऋक्षाणि—नक्ष त्राण्यभिजिदादीन्यष्टाविंशति । अष्टाशीतिर्ग्रहा मङ्गलादय, तन्नामानि चन्द्रप्रज्ञप्त्यादिभ्यो ज्ञेयानि ॥ ३० ॥ अथ तारकसंख्यामाह—

**छावट्ठिसहस्साइं, सयाइं नव पंचहत्तरी अ तहा ।**
**इगससिणो परिवारे, तारागणकोडिकोडीणं ॥ ३१ ॥**

छाव० । एकस्य शशिन परिवारे तारकाणा संबन्धिनीना कोटाको टीना षट्षष्टिसहस्राणि नवशतानि पञ्चसप्ततिश्च, अङ्कतो यथा—६६९७५ शू० १४ । एतच्च ग्रह ८८ नक्षत्र २८ तारकराशित्रिक नरलोकगतद्वात्रिंशदधिकशतचन्द्रै १३२ गुणितमेतद्भवति, यथा—
" इक्कारस य सहस्सा, छ प्पि अ सोला महग्गहाण तु ११६१६ ।
छ च सया छन्नउआ, नक्खत्ता तिन्नि अ सहस्सा ३६९६ ॥ १ ॥
अट्ठासीइ लक्खा, चालीस सहस्स मणुअलोगम्मि । सत्त य सया अणूणा, तारागणकोडिकोडीण ॥ २ ॥ " तथा समयक्षेत्रवर्तिनि द्वीपे समुद्रे यावन्तश्चन्द्रास्तदङ्कराशिनैस्चन्द्रसैन्याङ्के गुणिते तत्तद्द्वीपसमुद्र

वर्त्तिग्रहादिसंख्या स्वयं ज्ञेया, यन्त्रकाद्वावधार्या । अत्र तारकाणां बहुत्वात्क्षेत्रस्य स्तोकत्वाच्च केचित्कोटाकोटिरिति संज्ञान्तरं मन्यन्ते । केचिच्च तारकविमानान्युत्सेधाङ्गुलप्रमाणेन मन्यन्ते । किञ्चैतत्सैन्यं सूर्यस्यापि साधारणम्, चन्द्रस्येव तत्सैन्यस्य सूर्योऽप्यधिप इति, यदुक्तं **जीवाभिगमे ज्योतिष्कोद्देशे**–" एगमेगस्स णं भंते ! चंदिमसूरिअस्स चंदिमसूरिअस्स केवइओ परिवारो पन्नत्तो ?" त्ति सूत्रम् । अस्य वृत्त्येकदेशो यथा–' एकैकस्य भदन्त ! चन्द्रसूर्यस्य चन्द्रसूर्यस्य ' अनेन च पदेन यथा नक्षत्रादीनां चन्द्रः स्वामी तथा सूर्यस्यापि तस्यापीन्द्रत्वादिति स्थापयति । यद्वा **समवायाङ्गवृत्तावष्टाशीतिस्थानकेऽप्ययमेवाभिप्रायोऽस्ति तेन चन्द्रसूर्यौ ग्रहेभ्यो भिन्नौ तौ ग्रहाधिपौ ज्ञेयौ** ॥२१॥

| नामानि. | जम्बूद्वीपे | लवणाब्धौ | धातकी-खण्डे. | कालोदे. | पुष्करार्धे. | सर्वसंख्या. |
|---|---|---|---|---|---|---|
| चन्द्रसूर्याः | २ | ४ | १२ | ४२ | ७२ | १३२ |
| ग्रहाः | १७६ | ३५२ | १०५६ | ३६९६ | ६३३६ | ११६१६ |
| नक्षत्राणि | ५६ | ११२ | ३३६ | ११७६ | २०१६ | ३६९६ |
| तारककोटि-कोटयः | १३३९५ शू० १५ | २६७९ शू० १६ | ८०३७ शू० १६ | २८१२९५ शू० १५ | ४८२२२ शू० १६ | ८८४०७ शू० १६ |

अथ चन्द्रसूर्याणां केन प्रकारेण क्व प्रकाशक्षेत्रं वर्द्धते ? कदा च हीयते ? तदाह—

**तेसिं पविसंताण, तावक्खित्तं तु वड्ढए नियमा ।**
**तेणेव कमेण पुणो, परिहायइ निक्खमंताणं ॥ ३२ ॥**

तेसिं० । 'तेषां' सूर्याचन्द्रमसां सर्वबाह्यान्मण्डलादभ्यन्तरं प्रविशतां तापक्षेत्रं प्रतिदिवसं क्रमेण नियमादायामतो वर्धते । येनैव क्रमेण परिवर्धते तेनैव क्रमेण सर्वाभ्यन्तरान्मण्डलाद्बहिर्निष्क्रामतां परिहीयते । तथाहि-सर्वबाह्ये मण्डले चारं चरतां सूर्याचन्द्रमसां प्रत्येकं चतुर्णामपि दशधा प्रविभक्तस्य जम्बूद्वीपचक्रवालस्य द्वौ द्वौ भागौ तापक्षेत्रस्य भवतः । ततः सूर्यस्याभ्यन्तरं प्रविशतः प्रतिमण्डलं षष्ट्यधिकषट्त्रिंशच्छतं ३६६० प्रविभक्तस्य जम्बूद्वीपचक्रवालस्य द्वौ द्वौ भागौ तापक्षेत्रस्य वर्धेते । चन्द्रमसस्तु मण्डले मण्डले प्रत्येकं पौर्णमासी-सम्भवे क्रमेण प्रतिमण्डलं षड्विंशतिं षड्विंशतिभागाः सप्तविंशतितमस्य च भागस्यैकः सप्तभागः २६ $\frac{1}{7}$ । रवेरभ्यन्तरमण्डलपरिधिः ३१५०८९, स च ३६६० भक्तो लब्धा षडशीतिः ८६, शेषाः ३२९, ते षष्टिगुणिता १९७४०, तेऽपि च ३६६० भक्ता लब्धाः पञ्च $\frac{5}{60}$ शेषाः $\frac{1440}{3660}$ । चन्द्रस्य तु ८६ षड्विंशत्या गुण्यते २२३६, एकसप्तभागः षडशीतिगुणस्तदा ८६, स सप्तधा भक्तो लब्धा १२, ते २२३६ मध्ये क्षिप्ता २२४८, पञ्च भागाः षड्विंशतिगुणा जाता १३०, ते षष्ट्या हृता लब्धौ द्वौ, तौ २२४८ मध्ये क्षिप्तौ जातौ २२५० । तेषां तापक्षेत्राकारास्त्वन्तः संकुचिता बहिर्विस्तृता कलम्बुकापुष्पसंस्थान-संस्थिता, कोऽर्थः ? मेरुदिशि संकुचिता लवणदिशि विस्तृता । उक्तं हि-" तेसिं कलंबुआपुप्फसंठिआ हुंति तावखित्तपहा । अंतो संकुइआ बाहिं वित्थडा चंदसूराणं ॥ १ ॥ " ति ॥ ३२ ॥ अथो-

न्दराष्टदिवसे जम्बूद्वीपस्य दशभागकल्पनयैकस्सूर्यस्य तापक्षेत्रे कियन्तो भागा ? इत्याह—

**दीवस्स य दसभागा, इगपासे हुंति तिन्नि दिवसस्स ।**
**ककस्स य पढमदिणे, भागा पुण दुन्नि रयणीए ॥ ३३ ॥**

दीव० । द्वीपस्य त्रय दशभागा एकस्पार्श्वे ' दिवसस्य ' सूर्यतापक्षेत्रस्य कर्कसंक्रान्तिप्रथमदिने भवन्ति । कोऽर्थ ? दशधाविभक्ते जम्बूद्वीपचक्रवाले यल्लब्ध तादृशास्त्रयो भागा एकस्मिन्पार्श्वे दक्षिणत उत्तरतो वा । तदा रात्रे पुनर्दशभक्तौ द्वौ भागौ भवत । दिवसमलकभागत्रययोजनानि ९४५२६ $\frac{४२}{६०}$, रात्रिमन्धिभागद्वययोजनानि ६३०१७ $\frac{४८}{६०}$, उभयोर्मीलने १५७५४४ $\frac{३०}{६०}$ । एव द्वितीयसूर्यस्यापि दिनं रात्रिश्च, सर्वमीलने ३१५०८९ सर्वाभ्यन्तरमण्डलपरिधिर्जात । अत्र मेरु प्रति नवयोजनसहस्राणि चत्वारि शतानि षडशीत्यधिकानि नव च दश भागा योजनस्येत्येतस्मेरौत्कृष्टदशभागत्रयरूप तापक्षेत्रप्रमाण भवति ९४८६ $\frac{९}{१०}$ । कथम् ? मन्दरपरिधेरस्य त्रिंशत्सहस्रत्रयोविंशत्युत्तरषट्शताधिकत्रिंशयोजनसहस्रमानस्य ३१६२३ दशभिर्भागे हृते यल्लब्ध तस्य त्रिगुणत्वे एतस्य भावादिति । जघन्यदिवसे तु मेरु प्रति भागद्वय षड्योजनसहस्राणि त्रीणि शतानि चतुर्विंशत्यधिकानि षट् च दशभागा ६३२४ $\frac{६}{१०}$ ॥ ३३ ॥ अथ क्रमेण हीयमान जघन्यदिवसे यावत्प्रमाण तापक्षेत्रमवशिष्यते तदाह—

**मयरम्मि दुन्नि भागा, दिवसस्स य हुंति तिन्नि रयणीए ।**
**एव नायव्वाओ, दिणरत्तीवुड्ढिहाणीओ ॥ ३४ ॥**

मय० । कर्कसंक्रान्तेर्द्वितीयदिनादारभ्य पङ्क्तिमार्गेर्यावन्मकरसंक्रान्त्याद्य

दिनं तत्र परिपूर्ण एको भागो न्यूनो जातः, तेन सर्वबाह्यमण्डले सञ्चरतः सूर्यस्य द्वौ भागौ तापक्षेत्रसम्बन्धिनौ भवतः, त्रयो भागा रात्रेश्चेत्यवगन्तव्याः । अत्र दिनसत्कभागद्वयेन ६३६६३ योजनानि, रात्रिसत्कभागत्रयेण च ९५४९४$\frac{३०}{६०}$, दिनरात्रिमीलने १५९१५७ । एवं द्वितीयसूर्यस्यापि । एतदङ्कमीलने सर्वबाह्यमण्डलपरिधिर्जातः ३१८३१५ । तथा कर्काद्यदिने ९४५२६$\frac{४२}{६०}$ उदयास्तान्तरं, मकराद्यदिने च ६३-६६३ योजनानि, उभयमीलने १५८१८९$\frac{४२}{६०}$, पुनरर्द्धे कृते यद्भवति तच्च बहिर्गच्छतस्तुलाद्यदिने । मध्ये प्रविशतश्च मेषाद्यदिने द्विनवतितमण्डले सूर्यस्योदयास्तान्तरम् ७९०९९४ $\frac{५१}{६०}$ । द्वयोः सूर्ययोर्दिनरात्र्यपेक्षयैतद्राशौ चतुर्गुणे कृते तन्मण्डलपरिधिर्जायते, यथा–३१६३-७९$\frac{२४}{६०}$, तदा पञ्चदशमुहूर्तं दिनम्, पञ्चदशमुहूर्ता रात्रिरपि । सार्द्धौ द्वौ भागौ जम्बूद्वीपचक्रवालदशभागानां तापक्षेत्रं भवति । 'एवं' इति एवं–पूर्वोक्तप्रकारेण दिनरात्रिवृद्धिहानी ज्ञेये । वृद्धिहानियोजनानि प्रागुक्तानि । अत्र विशेषार्थिना **भगवतीपञ्चमशतकाद्योद्देशकवृत्ति**-रवगाह्या उद्योतान्धकारयन्त्रं चावलोकनीयम् । तत्स्थापना चेयम् ॥३४॥

अथ तत्रैवाऽनयोः सूर्ययोः समुदितयोः सूत्र एव तापक्षेत्रभागान गाथाद्वयेनाह—

**इह छ च्चिअ दसमाए, जंबूदीवस्स दुन्नि दिवसयरा ।**
**तावित्ति दित्तलेसा, अब्भंतरमंडले संता ॥ ३५ ॥**
**चत्तारि अ दसभाए, जम्बूदीवस्स दुन्नि दिवसयरा ।**
**तावित्ति मंदलेसा, बाहिरए मंडले संता ॥ ३६ ॥**

इह० । 'इह' अस्मिन् जम्बूद्वीपे षडेव दशभागान् जम्बूद्वीपस्य

द्वौ दिवसकरौ सर्वाभ्यन्तरे मन्तौ 'दीप्तलेश्यौ' भास्वत्तेजसौ तापयत । एकैकसूर्यस्य भागत्रयप्रमिततापक्षेत्राभिधानात् ॥ ३५ ॥ चत्ता० । तथा चतुरो दशभागान् जम्बूद्वीपस्य द्वौ दिवसकरौ सर्वबाह्ये सन्तौ 'मन्द लेश्यौ' मन्दतेजसौ तापयतस्तथाजगत्स्वाभाव्यात् ॥ ३६ ॥ अथ सर्वा भ्यन्तरे दशभागाना मध्यादेकैकभागस्य योजनकरण गाथाद्वयेनाह—

> एगारस अडतीसे, वज्जिसु सयाइ दीवपरिहीए ।
> मेस दसेहि विभत्ते, जं लद्धं तं इमं होइ ॥ ३७ ॥
> इगतीससहस्साइं, सयाइमट्ठाहियाइँ तह पंच ।
> चउपन्नसट्ठिभागा, छहि गुणणे असंखेयाखं ॥ ३८ ॥

एगा० । एकादशशतान्यष्टात्रिंशदधिकानि ११३८ 'जम्बूद्वीप परिधे ३१६२२७ वर्जयित्वा' जम्बूद्वीपपरिधिमध्यात् ११३८ कर्षन्त इत्यर्थ, 'शेषे' सर्वाभ्यन्तरमण्डलपरिधिरूपे ३१५०८९ दशभिर्भक्ते यल्लब्ध तद 'इद' वक्ष्यमाण भवति । यत सर्वाभ्यन्तर मण्डल जगतीतोऽशीत्यधिकयोजनशतेनार्वाग्, तत उभयो पार्श्वयोरपे क्षया तदङ्क द्विगुणीकृत्य ३६०, तच्च वर्गयित्वा दशगुण क्रियते, तदनु करणीकरणे ११३८ भवन्तीति ॥ ३७ ॥ इग० । एकत्रिंश त्सहस्राण्यष्टाधिकानि पञ्चशतानि योजनाना चतुष्पञ्चाशच्च षष्टिभागा योजनस्य । ते च कथ जाता ? 'छहि गुणणे असंखेआण' ति सर्वाभ्यन्तरमण्डलपरिधिदशमभागयोजनराश्या गमनानन्तरमवस्थितयो रश च्छेदराश्योर्नवकदशरूपयो $\frac{९}{१०}$ षड्भिर्गुणने जाता $\frac{५४}{६०}$, ततो दशस्वपि भागेषु प्रत्येक योजनान्यशाश्च भवन्ति ३१५०८ $\frac{५४}{६०}$, तद्दशगुणने मण्डलपरिधिर्भवति । एव द्वितीयादिसर्वमण्डलेषु तत्तन्निजनिजपरिधेरनु

सारेण दशभागा स्वबुद्ध्या विचार्या ॥३८॥ अथोत्कृष्टदिवसे जम्बूद्वीप वर्तिनो मनुष्या कियद्दूरत सूर्यमुदयन्त पश्यन्ति ? इति गाथाद्वयेनाह—

**एअस्स य रासिस्स य, तिगुणत्ते जो पुणो हवइ रासी ।**
**कक्कडचारो रविणो, उदयत्थमणेसु तस्सद्धा ॥ ३९ ॥**
**सीआलीससहस्सा, दो अ सया जोअणाण तेवट्ठा ।**
**इगवीससट्ठिभागा, कक्कडमाइम्मि पिच्छइ नरा ॥ ४० ॥**

एअ० । 'एतस्य' अनन्तरोक्त ( स्य ) राशे ३१५०८ ५४/६० त्रिगुणकरणेन यो राशिर्भवति ९४५२६ ४२/६० स रवे कर्कसक्रान्त्याद्य दिनसत्कश्चारो ज्ञेय । उदयास्तसमये च 'तस्सद्ध' त्ति तस्यार्द्धान्तरदूरच्छन्न सायमस्तमयश्च सूर्यो दृश्यते ॥ ३९ ॥ तद्योजनान्याह—

सीआ० । सप्तचत्वारिंशत्सहस्राणि त्रिषष्टयधिके द्वे च शते एकविंशतिषष्टिभागाश्च ४७२६३ २१/६०, एतावद्योजनेभ्यो दूरत सर्वाभ्यन्तरे मण्डले सूर्यमुदयन्तमस्तमयन्त च कर्काद्यदिने जम्बूद्वीपसत्कपूर्वविदेह भरतपश्चिमविदेहैरावतादिषु वासिनो नरा पश्यन्ति । यच्चेहोदयमान सूर्यो भूमिलग्नो दृश्यते तत्तु दूरत्वात् । पर भूमित सर्वत्रोच्चत्वेन समो वर्तते । यदुक्त भगवत्यामष्टमशतेऽष्टमोद्देशके—" जम्बूद्दीवे ण भते ! सूरिआ उग्गमणमुहुत्तंसि मज्झतिअमुहुत्तंसि अत्थमणमुहुत्तंसि सव्वत्थ उच्चत्तेण समा ? हता गोअमा ! " इत्यादि ॥ ४० ॥ अथो त्कृष्टदिवसे सूर्यस्य पश्चादग्रे च मिलित्वा कियत्तापक्षेत्र स्यात् ? तदाह—

**एअं चेव य दुगुणं, उभओ पासेसु तावखित्तं तु ।**
**एअं चेव य सव्वं, दट्ठव्वं बीअरविणो वि ॥ ४१ ॥**

एअ० । 'एतद्' अनन्तरोक्त तापक्षेत्रप्रमाण ४७२६३ २१/६०

पश्चाद्धेन वर्धते यावत् सर्वबाह्यमण्डले गत्वा द्विगुणं भवति १८३२८ $\frac{४२}{६०}$ कर्कस्य प्रथमदिने। तथैवेदं सर्वं पूर्वोक्तप्रकारेण जम्बू-द्वीपगतं द्वितीयसूर्येऽपि द्रष्टव्यम्॥ ४१ ॥ अथ कर्कमकरदिनयोरन्तरदिवसेषु प्रतिदिवस तेजसः का हानिः ? वृद्धिर्वा ? इत्यत्र का हानिर्वा वृद्धिर्वा ? इति प्रश्ने प्रागुक्तं कलेनोक्तमपि मन्दमतीनां तु—

जंबूदीवे पइदिणमुभओ पासेसु तावखित्तस्स ।
हाणीइ ओसराइं, अहियाइं वुड्डिहग्गीसु ॥ ४२ ॥

जम्बू० । जम्बूद्वीपे सूर्यस्य पूर्वापरयोरेककपार्श्वे तापक्षेत्रस्य साधि-कानि षडशीति षडशीतियोजनानि कर्कादानौ मकराद्य वृद्धौ भवन्ति। यतस्त्र्यशीत्यधिकेन दिनशतेन दशभागास्तस्य सर्वाभ्यन्तरमण्डलपरि धेरष्टोत्तरपञ्चशतसमधिकैकत्रिंशत्सहस्रमितं एको दशभागभागो हीयते वर्धते च तदेकैकेन दिनेन का हानिर्वृद्धिर्वा ? अत्र त्रैराशिकन्यासः— १८३। ३१५०८। १। एकेनान्त्येन गुणितो मध्यराशिस्तदेव भवति। ततो मध्य आद्येन भज्यते लब्धं च द्विसप्तत शतं, शेषा द्वाषिरा-त्स्थिता, ते च षष्टिगुणिता १९२०, चतुष्पञ्चाशच्च षष्टिभागा मीलिता १९७४ भवन्ति, तेऽपि १८३ भक्ता लब्धा दश १० शेषा $\frac{१४४}{१८३}$ उत्कोऽ द्विसप्तत्यधिकशतस्य चार्द्धं षडशीतियोजनानि ८६ $\frac{५}{६०}$ $\frac{१४४}{१८३}$, उत्कोऽ प्ययमर्थो दशमभागविभजनार्थमुक्तः। चन्द्रस्याप्येष राशिः ३१५०८ $\frac{५४}{६०}$ चतुर्दशविभक्तो द्वे सहस्रे सार्द्धे च द्वे शते सप्तत्रिंशच्च षष्टिभागा २२५० $\frac{३७}{६०}$॥४२॥ अथ मनुष्यलोकचारिशेषसूर्याणां वक्तव्यतामाह—

एवं सेसरवीण य, पयासखित्तं दसंसकप्पणया ।
ता नेअं जा चरमो, पुक्खरदीवद्धभाणु त्ति ॥ ४३ ॥

एव० । 'एव' अमुना प्रकारेण शेषरवीणामपि नरलोकवर्तिजम्बूद्वीपद्वयसमुद्रद्वयचक्रवालद्वशागकल्पनया दशभागविभजनया प्रकाशक्षेत्र योजनप्रमाण स्वस्वद्वीपसमुद्रमध्यनाह्यपरिधीनामनुसारेण तावज्ज्ञेय यावत्पुष्करार्द्धे चरमभानुरेकस्यक्तिगतषट्षष्टितम सूर्य इति, पर तेषा मन्तरालसूर्याणा निश्चयिस्थान परस्परमन्तर च शास्त्रेष्वदर्शनाद्योजना दिभिर्निर्न लिखिता । जीवाभिगमे लवणोदवक्तव्यतायां द्वितीयखण्डे जम्बूद्वीपगतसमश्रेणिप्रतिबद्धो दक्षिणत सूर्य शिखायामभ्यन्तर चार चरति, द्वितीय शिखाया परत । एवमुत्तरतोऽपि शिखाया आरत परत सूर्यौ । चन्द्रचतुष्कमप्येवमेव ॥ ४३ ॥ अथ पुष्करार्द्धे चरमभानो कियाँस्तेज प्रसरस्तदाह—

**लक्खेहिँ एगवीसाइ साइरेगेहिँ पुक्खरद्धम्मि ।**
**उदए पिच्छंति नरा, सूरं उक्कोसए दिवसे ॥ ४४ ॥**

लक्खे० । सातिरेकैरेकविंशतिलक्षयोजनै सर्वान्तिम सूर्यमुपलक्षणा चन्द्रमप्युदयन्तमस्तमयन्त च सर्वाभ्यन्तरे मण्डले उत्कृष्टेऽष्टादशमुहूर्ते दिवसे पुष्करार्द्धे मनुजा पश्यन्ति । तत्र परिधिरेवम्—" एगा जोअण कोडी, बायालीस हवंति लक्खाइ । तीस चेव सहस्सा, दो चेव सया अउणवन्ना ॥ १ ॥ " १४२३०२४९ इतिपरिधेर्दशभागा क्रियन्ते तादृश सार्द्धभागस्तेज प्रसर २१३४५३७ भवति । **प्रवचनसारोद्धारवृत्तिगताष्टाशीत्यधिकशततमेन्द्रियविषयविचार १८८ द्वारे**— " इगवीस खलु लक्खा, चउतीस चेव तह सहस्साइ । पच य सयाइ भणिआ, सत्ततीसाइ अइरित्ता ॥ १ ॥ इइ नयणविसयमाण, पुक्खरदीवड्ढवासिणो मणुआ । पुव्वेण य अवरेण य, पिह पिह तह दि

णुक्किट्टे ॥ २ ॥" उत्कृष्टदिवसे एतावद्योजनत उदितं पश्यन्ति, तत्र तावत्क्षेत्रपरिधिसद्भावात्। परमिदं सर्वाभ्यन्तरमण्डलं मानुषोत्तरादर्वाक् समवति, येन शेषमण्डलानामवकाशो दशोत्तरपञ्चशतयोजनान्तर्विलोमयत इति, तेनोक्ततेजःप्रसरः कतिचित्सहस्रैर्न्यूनो ज्ञेयः। नवरमियान् विशेषः—जम्बूद्वीपगतसूर्ययोर्दक्षिणोत्तरयोः करप्रसरेभ्यो लवणसमुद्रगतचन्द्रसूर्याणां दक्षिणोत्तरयोः करप्रसरः स्तोकः, पूर्वपश्चिमयोश्च भूयान्, क्षेत्रस्य परिधिबाहुल्यात्। धातकीखण्डे च षण्णां षण्णां पङ्क्तिगतसूर्याणामुत्तरोत्तरं दक्षिणोत्तरयोस्तेजःप्रसरः स्तोकः पूर्वपश्चिमयोश्च वर्धते। एवं कालोदे पुष्करार्द्धेऽपि पूर्वपश्चिमयोरतिबहुलो वर्धत इति स्थितिः। परं यो यः सूर्यो यत्र यत्र चरति तदधोवासिनो जनास्तमेव सूर्यं पश्यन्ति नान्यं तथाजगत्स्वाभाव्याद्व्यवस्थाभङ्गदोषप्रसङ्गाच्च। एवं चन्द्रग्रहादीनामपि व्यवस्था भावनीया ॥४४॥ अथ तेषां रवीणां दशभागादिस्वरूपमाह—

**सव्वपरिहीण एवं, सव्वे वि अ भाणुणो दसंसतिगं।**
**तावंतुकोसदिणे, जहन्नए दुन्नि उ दसंसे ॥ ४५ ॥**

सव्व०। लवणधातकीकालोदपुष्करार्द्धेषु सर्वपरिधीनां 'एवं' अमुना प्रकारेण जम्बूद्वीपन्यायेन सर्वेऽपि भानवः 'दशांशत्रिकम्' इति त्रीन् दशभागान् कर्कस्था युगपत्सर्वाभ्यन्तरमण्डले मध्यन्त उत्कृष्टदिवसे तापयन्ति, तदा दिनमानमष्टादशमुहूर्तम्, रात्रिर्द्वादशमुहूर्ता। जघन्यदिवसे समकं सर्वबाह्यमण्डलस्था मकरे द्वौ दशभागौ तापयन्ति, तदा दिनमानं द्वादशमुहूर्तं, रात्रिरष्टादशमुहूर्ता। सर्वेषां सूर्याणां चतुरशीत्यधिकशतमण्डलेषु प्रत्येकं षष्ट्या मुहूर्तैरेव समकं परिभ्रमणात् ॥

एतस्मिन् चतुर्दशगुणे कृते समस्तं चारक्षेत्रं नवाधिकपञ्चशतयोजनमितं त्रिपञ्चाशदेकषष्टिभागयुतं ५०९ ५३/६१, यतः कारणादष्टभिर्भागैरधिकं सूर्यबिम्बाच्चन्द्रबिम्बं षट्पञ्चाशद्भागमानत्वात् । अत्रापि विमानाक्रान्त-भूमेरगणनादष्टचत्वारिंशद्भागानामकथनेऽपि पूर्वोक्तेन सह न विरोधः ॥४८॥ अथ सर्वेषु क्षेत्रेषु दिक्चतुष्कनिर्णयस्वरूपं गाथायुगलेनाह—

जस्स जओ आइच्चो, उदेइ सा तस्स होइ पुव्वदिसा ।
जत्थ वि अ अत्थमेई, अवरदिसा सा उ नायव्वा ॥ ४९ ॥
दाहिणपासम्मि अ दाहिणा उ वामेण उत्तरा होइ ।
एआओ तावदिसा, सव्वेसिं उत्तरो मेरू ॥ ५० ॥

जस्स० । यस्य लोकस्य यतः स्थानादादित्य उदयमेति-दृग्गो-चरमायाति तस्य लोकस्य सैव पूर्वदिग् ज्ञेया । तथा यत्र स्थाने रवेरस्तमेति अदृश्यतायोगात्मा 'अपरा' पश्चिमा च ज्ञातव्या

४५ ॥ अथ तेषामपि सूर्याणां चारक्षेत्रतः सञ्चरतां कियद्भिर्दिनैस्तापक्षेत्रं वर्धते हीयते च ? इत्याह—

**एवं च सइ दसंसे, तेसिं पइसंतनीहरंताणं ।**
**वड्डइ हायइ तेसीसएण दिवसाण अणुकमसो ॥ ४६ ॥**

एवं० । ' एवं ' पूर्वोक्तप्रकारे सति ' तेषां ' सूर्याणां मकरे सर्वबाह्यान्मण्डलान्मध्ये प्रविशतां कर्के च सर्वाभ्यन्तराद्बहिर्निस्सरतां दिवसानां त्र्यशीत्यधिकशतेनानुक्रमशः एकैको दशांशो वर्धते हीयते च । वृद्धिहानियोजनसंख्या दशमभागयोजनसंख्या च तत्तद्द्वीपसमुद्राणां मध्यबाह्यपरिध्यनुसारेण वाच्या ॥ ४६ ॥ अथ जम्बूद्वीपादन्यरवीणां मण्डलसंख्या मण्डलान्तरप्रमाणं चारक्षेत्रविष्कम्भमानं चाह—

**सव्वेसिं पि रवीणं, सव्वेसिं मंडलाण अन्तुत्रं ।**
**दोजोअणंतरालं, पंचसयदहुत्तरो चारो ॥ ४७ ॥**

सव्वे० । सर्वेषां रवीणां चतुरशीत्यधिकशतसंख्यानां मण्डलानामन्तरं प्रत्येकं द्वे योजने, चारक्षेत्रविष्कम्भस्तु दशोत्तराणि पञ्चशतयोजनानि ज्ञेयानि । अष्टचत्वारिंशदेकषष्टिभागास्तु स्तोकत्वान्नोक्ताः । अथवा प्रथममण्डलस्यान्त्यमण्डलस्य वा चाराभावादष्टचत्वारिंशन्नोक्ताः, जम्बूद्वीपाधिकारे चोक्ता, परमार्थस्त्वेक एव ॥ ४७ ॥ अथ शेषचन्द्राणां चारक्षेत्रमानादिस्वरूपमाह—

**इगसट्ठिसतिवन्ना, चंदाणं पंचनवहिअसयाइं ।**
**अट्ठहिं भागेहि जओ, अब्भहिअं मण्डलं ससिणो ॥४८॥**

इग० । जम्बूद्वीपचन्द्राणामपि प्रत्येकं मण्डलानि पञ्चदशैव, तेषां मण्डलानां भूमिरन्तरं च सातिरेकाणि पञ्चत्रिंशद्योजनानि ३५ $\frac{३०}{६१}$ $\frac{४}{७}$,

एतस्मिन् चतुर्दशगुणे कृते समस्त चारक्षेत्र नवाधिकपञ्चशतयोजनमितं त्रिपञ्चाशच्चैकषष्टिभागयुत ५०९ ५३/६१, यत कारणादष्टभिर्भागैरधिकं सूर्यबिम्बाच्चन्द्रबिम्बं षट्पञ्चाशद्भागमानत्वात्। अत्रापि विमानाक्रान्त भूमेरगणनादष्टचत्वारिंशद्भागानामकथनेऽपि पूर्वोक्तेन सह न विरोध ॥४८॥ अथ सर्वेषु क्षेत्रेषु दिक्चतुष्कनिर्णयस्वरूप गाथायुगलेनाह—

**जस्स जओ आइच्चो, उदेइ सा तस्स होइ पुव्वदिसा।**
**जत्थ वि अ अत्थमेई, अवरदिसा सा उ नायव्वा॥ ४९॥**
**दाहिणपासम्मि अ दाहिणा उ वामेण उत्तरा होइ।**
**एआओ तावदिसा, सव्वेसिं उत्तरो मेरू॥ ५०॥**

जस्स०। यस्य लोकस्य यत स्थानादादित्य उदयमेति–दृग्गो चरमायाति तस्य लोकस्य सैव पूर्वदिग् ज्ञेया। तथा यत्र स्थाने सूर्योऽस्तमेति अदृश्यतायोगात्सा 'अपरा' पश्चिमा च ज्ञातव्या ॥ ४९ ॥ दाहि०। उदयमानसूर्याभिमुखस्ततस्तस्य लोकस्य दक्षिण पार्श्वे दक्षिणा भवति वामपार्श्वे तूत्तरा। भावना यथा–पूर्वविदेहाना लोकाना या पश्चिमा सा भरतसम्बन्धिना पूर्वा, भरते या पश्चिमा सा पश्चिमविदेहेषु पूर्वा, पश्चिमविदेहेषु या पश्चिमा सा ऐरावते पूर्वा, ऐरावते या पश्चिमा सा पूर्वविदेहेषु पूर्वेत्यादि। सूक्ष्मेक्षिकया यौगलिकक्षेत्रवर्षधरादिषु सर्वत्र पूर्वादयो दिशो विचार्या। यतो जम्बूद्वीपप्रज्ञप्त्याम्–"जम्बुद्दीवे ण भंते! सूरिआ उदीणपाईणमुग्गच्छ पाईणदाहिणमागच्छंति? १ पाईणदाहिणमुग्गच्छ दाहिणपडीणमागच्छंति? २ दाहिणपडीणमुग्गच्छ पडीणउदीणमागच्छंति? ३ पडीणउदीणमुग्गच्छ

उदीणपाईणमागच्छंति ? ४ हंता गोअमा ! । " इत्यादि, काका प्रश्नः । तथा तापयतीति तापः--सूर्यस्तदाश्रिता दिक् तापदिक्, एताः पूर्वोक्तास्तापदिशोऽवगन्तव्याः, सूर्यप्रभवा इत्यर्थः । क्षेत्रदिशस्तु मेरुरुचकप्रभवा भवन्ति, रुचका अपि मेरुसर्वमध्यस्थिता अष्टौ प्रदेशाः समभूतलस्थाने गोस्तनाकाराः । तत्र चतस्रो द्विप्रदेशादयो द्व्युत्तराः शकटोद्धींसंस्थाना महादिशः पूर्वाद्याः, चतस्र एकैकप्रदेशाः, मुक्तावलीनिभा विदिशः, द्वे च चतुष्प्रदेशात्मिके ऊर्ध्वाधोदिशाविति । तेन जम्बूद्वीपजगत्यां विजयनामद्वारि पूर्वा दिक्, एवं वैजयन्तद्वारि दक्षिणा, जयन्तद्वारि पश्चिमा, अपराजिते उत्तरा । एवं च सर्वत्र द्वीपे जगतीद्वाराण्येतन्नामान्येव सन्तीति क्षेत्रदिग्निर्णयः । अथ तापदिगपेक्षया ' सर्वेषां ' कर्माकर्मभूमिजजनानां मेरुः 'औतर:' उत्तरस्याम्, लवणोदधातकीखण्डकालोदपुष्करार्द्धेष्वनेनैव क्रमेण जम्बूद्वीपसूर्यवद्दिग्विभागो ज्ञेयः, सर्वेषां समकं सञ्चरणात् । एतत्कथनेन सूर्यस्य मेरुसमन्ताच्चतसृपु(दिक्षु)गतिरुक्ता । ततश्च ये मन्यन्ते सूर्यः समुद्रे प्रविश्य पाताले गत्वा पुनः पूर्वसमुद्रे उदेतीति तन्मतमपास्तम् ॥ ५० ॥ अथ सूर्यस्य दिशः सामान्येनाह—

**पिट्ठे पुव्वा पुरओ, अवरा वलए भमंतसूरस्स ।**
**दाहिणकरम्मि मेरू, वामकरे होइ लवणोही ॥ ५१ ॥**

पिट्ठे० । मेरुं परितः प्रदक्षिणावर्तेन सूर्यस्य भ्रमतः पृष्ठे पृष्ठे पूर्वा दिक्, पुरतः 'अपरा' इति पश्चिमा । सूर्यस्य दक्षिणहस्ते मेरुः, वामकरे लवणोदधिर्भवति । एताः सूर्यदिशो न तु जनानाम्, जनानां सूर्यापेक्षया

दिशो भवन्तीत्युक्तम् ॥ ९१ ॥ अथ षट्सु दिक्षु जम्बूद्वीपगतसूर्ययो करप्रसार गाथाषट्केनाह—

**सगचत्तसहस दुसई, तेवट्ठा तहिगवीस सट्ठंसा।**
**पुव्वावरकरपसरो, कक्के सूरा अहुत्तरओ ॥ ५२ ॥**

सग० । कर्कादिदिने योजनाना सप्तचत्वारिंशत्सहस्राणि द्वे च शते त्रिषष्टयधिके एकविंशतिश्च षष्टिभागा ४७२६३ $\frac{21}{60}$ एतावान्सूर्यास्पूर्वस्यामेतावानेव सूर्यादपरस्या करप्रसर। इदं तु पूर्वमुक्तमपि षड्दिक्करप्रसाराधिकारात्पुन कथितम् 'अहुत्तरओ' त्ति अथोत्तरतो मेरुदिशि करप्रसर उच्यते ॥ ९२ ॥ तदाह—

**असिइसउत्थ सहस्सा, पणयालीसाइ जम्मओ दीवे।**
**असिइसयं लवणे वि अ, तित्तीससहस्स सतिभागा ॥५३॥**

असि० । सर्वाभ्यन्तरे मण्डले वर्तमानस्य सूर्यस्य द्वीपान्तर्गतीनोऽशीत्यधिकयोजनशतप्रवेशात्तद्रन १८० पञ्चचत्वारिंशत्सहस्राणि करप्रसर, एतावता चतुश्चत्वारिंशत्सहस्राणि विंशत्यधिकान्यष्टौ शतानि ४४८२० मेरु यावत्करप्रसर । मेरुमध्यभागस्थरुचकप्रदेशं यावत्करप्रसर. सूर्यस्यास्ति पर तत्रावकाशाभावान्मेर्वन्तर्न प्रविशति । यद्यपि मण्डलसमश्रेणेर्मेरोर्विष्कम्भो योजनदशसहस्रात्मको न लभ्यते किन्तु किञ्चिन्न्यूनस्तथापि व्यवहारेणैतावान् ग्राह्य । 'अह जम्मओ' त्ति अथ याम्यत—लवणदिशि द्वीपमध्येऽशीत्यधिक शत १८०, लवणे च त्रयस्त्रिंशत्सहस्राणि 'सतिभाग' त्ति सहस्रतृतीयांशयुतानि योजनानि ३३३३३ $\frac{1}{3}$, अशीत्यधिकशतमीलने जात ३३५१३ $\frac{1}{3}$ कर-

प्रसरः। एवमेतत्समश्रेणिस्थस्य द्वितीयरवेरपि करप्रसरो भाव्यः ॥५३॥
अथ ततः प्रतिदिनं हीयमानो मकरे यावानवशिष्यते तदाह—

**इगतीससहस्सअडसयइगतीसा तह य तीस सट्ठंसा ।**
**मयरे रविरस्सीओ, पुव्ववरेणं अह उदीणे ॥ ५४ ॥**

इग० । सर्वाभ्यन्तरान्मण्डलाद्बहिर्निष्क्रामन् सूर्यः क्रमेण पूर्वापराभ्यां प्रतिदिनं षडशीत्या षडशीत्या योजनैः करप्रसरतो हीयमानैर्मकरे सर्वबाह्यमण्डलमागच्छति। तत्र चैकत्रिंशत्सहस्राण्यष्टौ शतान्येकत्रिंशदधिकानि त्रिंशच्च षष्टिभागा योजनस्य ३१८३१ $\frac{३०}{६०}$, एतावत्प्रमाणो मकराद्यदिने पूर्वस्यामपरस्यां च करप्रसरो भवति, पूर्वापरमीलने तद्दिनोदयास्तान्तरं जातं ६३६६३। अथोदीच्याम् ॥५४॥ तदाह—

**लवणे तिसई तीसा, दीवे पणचत्तसहस अह जम्मे ।**
**लवणम्मि जोअणतिगं, सतिभाग सहस्स तित्तीसा ॥५५॥**

लव०। सर्वबाह्ये मण्डले सूर्यो लवणसमुद्रे त्रिंशद्योजनाधिकां त्रिशतीं याति, तेन लवणसम्बन्धीनि त्रीणि शतानि त्रिंशदधिकानि ३३०, द्वीपे च पञ्चचत्वारिंशत्सहस्राणि ४५०००, उभयमीलने ४५३३०, उत्तरस्यां करप्रसरः। 'अह जम्मे' त्ति अथ याम्ये—लवणदिशि त्रयस्त्रिंशत्सहस्राणि योजनस्य तृतीयांशयुतयोजनत्रयाधिकानि ३३००३ $\frac{१}{३}$ करप्रसरः ॥ ५५ ॥ अथ याम्योत्तरयोः सर्वदा सर्वाग्रमाह—

**पइदिणमवि जम्मुत्तर, अडसत्तरिसहस सहसतइअंसो ।**
**उड्डह गुणवीससया, अठिआ पुव्वावरा रस्सी ॥ ५६ ॥**

पइ०। सर्वसंक्रान्तिषु प्रतिदिनं याम्योत्तरयोः करप्रसरमीलनेऽष्टसप्ततिसहस्राः सहस्रतृतीयांशश्च ७८३३३ $\frac{१}{३}$। अपिशब्दः सर्वदाप्येता-

यत्प्रमाणमित्थिरत्वसूचकं । तयोर्द्धाधश्च मील्ने एकोनविंशतिशतानि, **समवायाङ्गेऽप्येकोनविंशतिस्थाने** तयोक्तत्वात्। तथा पूर्वस्यामपरस्या च रवे रश्मय' सूर्यरश्मिणानि सर्वदिनेष्ववस्थिता, सर्वमण्डलेषु हानि-वृद्धिमद्भावात् ॥ ९६ ॥ अथोर्द्धाधस्तेज प्रसर प्रथक्त्वमाह—

**मयरम्मि वि कक्कम्मि वि, हिट्ठा अट्ठारजोअणसयाइं ।**
**जोअण सयं च उड्ढ, रविकर एवं छसु दिसासु ॥ ४७ ॥**

मय० । 'मकरे' इति दक्षिणायनसर्वदिनेषु 'कर्के' इत्युत्तरायण सर्वदिनेषु च सूर्यादधोऽष्टादशयोजनशतानि तेजःप्रसर । यत सूर्या दधोऽष्टयोजनशतं समभूतलम्, समभूतलापेक्षया योजनसहस्रमधो-ग्रामा, ते हि जम्बूद्वीपापरविदेहेषु मेरोरारभ्य जगत्यभिमुख ह्रिचत्या रिंशद्योजनसहस्रे क्रमेण क्षेत्रस्यातिनिम्नीभवनादन्तिमविजयद्वयप्रदेशे सन्ति । उक्त हि **लघुक्षेत्रसमासे**–' जोअणसयदसगन्ते, समधरणीओ अहे अहोगामा । बायालीससहस्सेहिं गतु मेरुस्स पच्छिमओ ॥ १ ॥" तत्रैवाष्टादशशतानि, अन्यत्र यथासम्भवम् । अय चाध प्रसरो जम्बू-द्वीपगतसूर्ययोरेव । अन्ये सूर्यास्त्वधोऽष्टशतान्येव तपन्ति, क्षेत्रस्य समत्वादिति। ऊर्ध्वं तु सर्वथा शतमेव प्रसर, यदुक्त **भगवत्यामष्ट-मशतेऽष्टमोद्देशके**–" जबुद्दीवे दीवे ण भते ! केवइअ खित्त उड्ढ तवेति केवइअ खित्त अहो तवेति केवइअ खित्त तिरिअ तवेति ? गोअमा ! एग जोअणसय उड्ढ तवति अट्ठारसजोअणसयाइ तवेति । ' इत्यादि । ' एव ' अमुना प्रकारेण षट्सु दिक्षु रविकर प्रसर ॥ ४७ ॥ अथ गाथाद्विकेन रविमण्डलानिस्थानान्याह—

**जइआ जंबूमंदरनगाउ पुव्वावरेण होइ दिणं ।**
**तइआ रयणी नेआ, नरलोए दाहिणुत्तरओ ॥ ५८ ॥**
**उत्तरदाहिणओ पुण, दिवसे पुव्वावरेण किर रयणी ।**
**भणिआमिणं पंचमसयपढमुद्देसे भगवईए ॥ ५९ ॥**

जइआ० । यदा जम्बूद्वीपमध्यवर्तिमन्दराद्रेः पूर्वस्यामपरस्यां च मानुषाद्रिं यावत्सर्वत्र सम्बद्धं दिनं भवति तदा सकले नरलोके रात्रिर्दक्षिणोत्तरयोर्ज्ञेया ॥ ५८ ॥ उत्त० । यदा चोत्तरदक्षिणयोः पुनर्द्वाभ्यां सूर्याभ्यां दिवसः स्यात्तदा पूर्वस्यामपरस्यां च 'किल' निश्चितं सर्वत्र सम्बद्धा मानुषोत्तरं यावद्रात्रिर्भवति, जात्येकवचनम्, इति भणितं दिनरात्रिस्वरूपं **पञ्चमशतकप्रथमोद्देशके भगवत्याः**, तदालापकश्चायम्—"जया णं भंते ! जंबुद्दीवे दीवे दाहिणड्ढे दिवसो भवति तया णं उत्तरड्ढे दिवसे भवइ ?, जया णं दाहिणड्ढउत्तरड्ढे वि दिवसो भवइ तया णं पुरच्छिमपच्चच्छिमे णं राई भवइ ? जया णं भंते ! लवणसमुद्दे दाहिणड्ढे दिवसे भवइ तया णं उत्तरड्ढे दिवसो भवइ ? जया णं दाहिणड्ढउत्तरड्ढे दिवसो भवइ तया णं पुरच्छिमपच्चच्छिमे णं राई भवइ ?, जया णं भंते ! धायइसंडे दीवे दाहिणड्ढे दिवसे भवइ तया णं उत्तरड्ढे वि दिवसो भवइ ?, जया णं धायइसंडे दाहिणड्ढउत्तरड्ढे दिवसे भवइ तया णं पुरच्छिमपच्चच्छिमे णं राई भवई ?, हंता गोयमा ! । एवं कालोए वि पुक्खरद्धे वि । " इत्यादि, काक्वा उद्देशकोऽवगाह्यः ॥ ५९ ॥ अथ प्रतिद्वीपं प्रतिसमुद्रं कति दिवसाः कति रात्रयश्च भवन्ति ? इत्याह—

**दीवसमुद्देसु सया, रविप्पमाणा य वासरा हुंति ।**
**रयणीउ चंदसंखा, समसेणीए मणुअलोए ॥ ६० ॥**

दीव० । नरलोकवर्तिसार्द्धद्वयद्वीपे समुद्रद्वये च यावन्तः सूर्यास्तावन्तो वासरा भवन्ति । भावना यथा—जम्बूद्वीपे मेरोरुभयतः समश्रेण्या द्वौ वासरौ, एवं लवणे एकैकपार्श्वे उभय(द्वय)मेवमाचत्वारः, धातकीखण्डे द्वादश, कालोदे द्विचत्वारिंशत्, पुष्करार्द्धे द्वासप्ततिः, एवं सर्वेऽपि द्वात्रिंशदधिकं शतं वासराः सम्बद्धा समश्रेण्या भवन्ति, सर्वेषां सूर्याणां समकं चलनात् षष्ट्या मुहूर्तैरेव मण्डलपूरणाच्च । तेषां मुहूर्तगतिमानादिकं मण्डलपरिधेः षष्टिभागहारैर्बोध्यम् । तथा चन्द्रप्रमाणा रात्रयोऽपि द्वात्रिंशदधिकं शतम् । तेषां मुहूर्तगतिमानादिकं साधिकद्वाषष्टिमुहूर्तैर्ज्ञेयम् ॥ ६० ॥ अथ यदा कर्कसङ्क्रान्तौ भरतेऽष्टादशमुहूर्त्तं दिनमानं तदा पश्चिमविदेहैरावतपूर्वविदेहादिष्वियन्मानमुतान्यथा ? इति प्रश्नस्योत्तरं गाथाद्वयेनाह—

**पुव्वविदेहे सेसे, मुहुत्ततिगि वासरे निरिक्खंति ।**
**भरहनरा उदयंतं, सूरं कक्करस पढमदिणे ॥ ६१ ॥**
**भरहे वि मुहुत्ततिगे, सेसे पच्छिमविदेहमणुआ वि ।**
**एरवए वि अ एवं, तेण दिणं सव्वओ तुल्लं ॥ ६२ ॥**

पुव्व० । पूर्वविदेहक्षेत्रे मुहूर्त्तत्रिकप्रमाणदिने सति कर्कादे दिने सूर्यमुद्यन्तं ' भरतनराः ' भरतक्षेत्रवासिनो जनाः पश्यन्ति ॥ ६१ ॥ भर० । भरतक्षेत्रेऽपि मुहूर्तत्रिकप्रमाणे 'शेषे' अवशिष्यमाणे दिने सति कर्कादे दिने पश्चिमविदेहमनुष्याः सूर्यमुदयन्तं पश्यन्ति । ' एवं ' अमुना प्रकारेण पश्चिमविदेहक्षेत्रे मुहूर्तत्रिके सति ऐरावतवासिनो नरा

उदितं पश्यन्ति, ऐरावतेष्वपि मुहूर्त्तत्रिके पूर्वविदेहमनुष्याश्च, ततोऽग्रेतनक्षेत्रे मुहूर्त्तत्रिके दिने चटिते पाश्चात्यक्षेत्रे सूर्योऽस्तमेतीत्यर्थः । यथोदयवेलासम्बन्धि मुहूर्त्तत्रिकं लब्धं तथास्तसमयादर्वाग्मुहूर्त्तत्रिकं लभ्यते, अतः सर्वत्र क्षेत्रे सर्वाभ्यन्तरे मण्डले वर्त्तमाने सूर्येऽष्टादशमुहूर्त्तं तुल्यमेव, रात्रिश्च सर्वत्र द्वादश मुहूर्त्ता । तदा च पूर्वपश्चिमविदेहभरतैरावतेषु चतुर्षु स्थानेषु मुहूर्त्तत्रिकं यावद्दिवसो युगपत्प्राप्यते, परं पूर्वपश्चिमविदेहक्षेत्रयोः सन्ध्याकालिकं मुहूर्त्तत्रिकं भरतैरावतक्षेत्रेषु प्राभातिकम्, यदा च भरतैरावते सायन्तनं तदा च पूर्वपश्चिमविदेहेषु प्राभातिकमित्येवमभ्यूह्यम् । कर्कसङ्क्रान्त्याद्यदिनव्यतिरिक्तशेषेषु दिनेषु प्रतिमण्डलं किञ्चिन्न्यूनचतुष्पलैरुदयास्तमायाभ्यां हानिवृद्धी ज्ञेये ॥ ६२ ॥ अथ सर्वत्राष्टादशमुहूर्त्ता रात्रिः कथं स्यात् ? इत्याह—

**जंबुद्दीवे मयरे, रयणीइ मुहुत्ततिगि अइकंते ।**
**उदयइ तहेव सूरो, मुहुत्ततिगसेसि अत्थमए ॥ ६३ ॥**

जंबु० । जम्बूद्वीपे सर्वाभ्यन्तरात्क्रमेण दिने हीयमाने सूर्यो यदा सर्वबाह्ये मण्डले गच्छति तदा पूर्वविदेहेषु मकराद्यदिने रात्रेर्मुहूर्त्तत्रिकेऽतिक्रान्ते सूर्यो भरते उदयमेति, तथैव मुहूर्त्तत्रिके च शेषे सत्येवास्तमेति । तथा भरते रात्रेर्मुहूर्त्तत्रिके गते सति पश्चिमविदेहक्षेत्रे सूर्योदयः, अवशिष्टे रात्रेर्मुहूर्त्तत्रिके सूर्यस्यास्तमयनं स्यात् । एवमैरावते पूर्वविदेहेष्वपि भाव्यम् । रात्रिः सर्वत्राष्टादशमुहूर्त्ता, यदुक्तं **भगवत्यां पञ्चमशतकप्रथमोद्देशके**—"जया णं भंते ! जंबुद्दीवे दीवे दाहिणड्ढे उक्कोसए अट्ठारसमुहुत्ते दिवसे भवइ तया णं उत्तरड्ढे वि उक्कोसए अट्ठारसमुहुत्ते दिवसे भवइ ?, जया णं दाहिणड्ढे उत्तरड्ढे उक्कोसए

अट्ठारसमुहुत्ते दिवमे भवइ तया णं जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरच्छिमपच्चच्छिमे णं जहन्निया दुवालसमुहुत्ता राई भवइ ?, जया णं पुरच्छिमपच्चच्छिमे णं अट्ठारसमुहुत्ते दिवसे तया णं दाहिणड्ढे उत्तरड्ढे वि दुवालसमुहुत्ता राई भवइ ?, हंता गोअमा ! ।" एवमष्टादशमुहूर्त्त-रात्रेरप्यालापको ज्ञेयः । ततो भरतैरावतविदेहद्वयादिषु सर्वत्र द्वादश-मुहूर्त्तं दिनम्, द्वादश चतुर्गुणिता अष्टचत्वारिंशद्भवन्ति । मण्डलेषु भ्रमिकालः सूर्याणां मुहूर्त्ताः षष्टिरेव, तेन द्वादशमुहूर्त्ता रात्रावेव सम्माता इति सिद्धं सर्वत्र दिनरात्रिमानं तुल्यम् । यदा द्वादशमुहूर्त्तं दिनं तदा बाह्यमण्डलेषु गतत्वेन सूर्ययोः करप्रसरहानेस्तावत्कालमदर्शनात्तथाज-गत्स्वाभाव्यादिति ॥ ६३ ॥ अथ शेषमनुष्यलोके दिनरात्रिप्रमाणमाह—

**णरलोगम्मि अ सेसे, एवं दिणरयणिमाणमवि नेअं ।**
**नवरं बहिआ बहिआ, ससिसूराणं गई सिग्घा ॥ ६४ ॥**

णर० । ' एवं ' अनेन न्यायेन शेषे नरलोके दिनरात्रिमानमपि जम्बूद्वीपवज्ज्ञेयम्, तत्रत्यपूर्वविदेहपश्चिमविदेहभरतैरावतादिषु सर्वा-भ्यन्तरमण्डलचारिषु सूर्येषु दिनमष्टादशमुहूर्त्तं रात्रिर्द्वादशमुहूर्त्तेत्या-दिकं तथैव परिभावनीयम् । यतो येषु दिनेषु जम्बूद्वीपे मध्यबाह्य-मण्डलेषु सूर्यौ भवतस्तेष्वेव दिनेषु तेऽपि सूर्यास्तत्रत्यमध्यबाह्यमण्डले-ष्वेव भवन्ति । उत्तरचारित्वं दक्षिणचारित्वं च सर्वेषां १३२ समकं भवति, एकनामकनक्षत्रराशिषु सर्वेषां सूर्याणामवस्थानात् । ' नवरं ' इत्ययं विशेषः—लवणादिषु ये येभ्यो बहिः सूर्यास्तेषां ' गतिः ' चलनं 'शीघ्रा' शीघ्रतरा जायते ॥६४॥ अथ सर्वत्र क्षेत्रेषु दिनरात्रिसम्बन्ध्य-ष्टप्रहरकालस्वरूपमाह—

**पढमपहराइकाला, जंबुदीवम्मि दोसु पासेसु ।**
**लब्भंति एगसमयं, तहेन सव्वत्थ णरलोए ॥ ६५ ॥**

पढ० । प्रथमप्रहरादिका उदयकालादारभ्य रात्रेश्चतुर्थयामान्त्यकालं यावन्मेरो समन्तादहोरात्रस्य सर्वे काला समकालं जम्बूद्वीपे पृथक् पृथक् क्षेत्रे लभ्यन्ते । भावना यथा—भरते यदा यत स्थानात्सूर्य उदेति तत्पाश्चात्याना दूरतराणा लोकानामस्तकाल, उदयस्थानाधोवासिना जनाना मध्याह्न, एव केपाञ्चित्प्रथम प्रहर, केषाञ्चिद्द्वितीय प्रहर, केषाञ्चित्तृतीय प्रहर, क्वचिन्मध्यरात्र, कचित्सन्ध्या, एव विचारणयाष्टप्रहरसम्बन्धी काल समकं प्राप्यते । तथैव नरलोके सर्वत्र जम्बूद्वीपगतमेरो समन्तात् सूर्यप्रमाणेनाष्टप्रहरकालसभावन चिन्त्यम् ॥६५॥
सूर्यचन्द्रयो स्वरूपमुक्त्वाऽथ चन्द्रस्य किञ्चिद्विशेषमाह—

**केणं वड्ढइ चंदो, परिहाणी होइ केण चंदस्स ।**
**केण सिअकिण्हपक्खा, दिणे अ रत्तिम्मि केणुदओ ॥६६॥**

केण० । केन प्रकारेण चन्द्र शुक्लपक्षे वर्धते ? १ केन प्रकारेण कृष्णपक्षे चन्द्रस्य परिहानिर्भवति ? २ केन प्रकारेण शुक्लपक्षो भवति ? ३ केन प्रकारेण कृष्णपक्षोऽपि ? ४ केन प्रकारेण कदाचि चन्द्रस्य रात्रावुदय स्यात् ? ५ केन च दिवाप्युदयोऽपि ? ६ ॥६६॥
अथैतान षट् प्रश्नान् विवृण्वन प्रथम राहुस्वरूपमाह—

**किण्हं राहुविमाणं, निच्चं चंदेण होइ अविरहिअं ।**
**चउरंगुलमप्पत्तं, हिट्ठा चंदस्स तं चरइ ॥ ६७ ॥**

किण्ह० । इह द्विधा राहु, नित्यराहु पर्वराहुश्च । तत्र यो नित्य राहुस्तस्य विमान कृष्णम्, तच्च जगत्स्वाभाव्यात् 'नित्य' आ काल

चन्द्रेण सार्द्धमविरहितं चतुर्भिरङ्गुलैरप्राप्तं सञ्चन्द्रविमानस्याधस्ताच्चरति ॥ ६७ ॥ अथ चन्द्रस्य वृद्धिहानिस्वरूपमाह—

**यावड्ढि यावड्ढि, दिवसे दिवसे उ सुक्कपक्खस्स ।**
**जं परिवड्ढइ चंदो, खवेइ तं चेव कालेण ॥ ६८ ॥**

याव० । द्वाषष्टिभागीकृतचन्द्रविमानस्य द्वौ भागावुपरितनौ सदा प्यनावार्यस्वभावत्वात्तावपाकृत्य शेषाः षष्टिभागाः पञ्चदशभागैर्ह्रियन्ते चत्वारो लभ्यन्ते । अयमत्र समुदायोपचाराच्छुक्लपक्षस्य दिवसे दिवसे चतुरो द्वाषष्टिभागान् यान् परिवर्धते 'कालेन' कृष्णपक्षेण पुनर्दिवसे दिवसे तानेव द्वाषष्टिभागान् ' क्षपयति ' परिहापयति । उक्तं हि—" पन्नरसभागेण य, चंदं पन्नरसमेव तं वरइ । पन्नरसमविभागेण य, तेणेव कमेणऽवक्कमइ ॥ १ ॥ " व्याख्या—कृष्णपक्षे प्रतिदिवस राहुविमानं स्वकीयेन पञ्चदशभागेन तं चन्द्रमिति चन्द्रविमानस्य पञ्चदशमेव भागं 'वृणोति' आच्छादयति । शुक्लपक्षे पुनस्तमेव प्रतिदिवसं पञ्चदशभागमात्मीयेन पञ्चदशभागेन ' व्यतिक्रामति ' मुञ्चतीत्यर्थः । **जीवाभिगमवृत्तिगतमिदम् ॥ समवायाङ्गवृत्तौ तु द्विषष्टिस्थाने**—" यावट्टि यावट्टि " इत्यत्र चन्द्रविमानस्यैकत्रिंशदुत्तरनवशतविभक्तस्य ९३१ एकोऽशोऽवशिष्यते, शेषाः प्रतिदिवसं द्विषष्टिर्द्विषष्टिर्वर्धन्ते, एकत्रिंशदुत्तरनवशताङ्कस्य पञ्चदशदिनरूपभागैर्हृतस्य द्वाषष्टेर्लभ्यमानत्वात्, एकः शेषः, ततः पञ्चदशदिनैः सर्वे समुदिता भवन्ति । कृष्णपक्षे पुनस्तथैव हीयन्त इति व्याख्यातम् ॥ ६८ ॥ अथ तृतीयं मतं **सूर्यप्रज्ञप्तिगतमुच्यते**—

**सोलसभागे काऊण उडुवई हायएत्थ पन्नरसं ।**
**तत्तियमित्ते भागे, पुणो वि परिवड्ढए जोण्हा ॥ ६९ ॥**

सोल० । षोडशभागान् कृत्वा 'उडुपति' चन्द्रः कृष्णपक्षे प्रतिदिनमेकैकं पञ्चदशभागं परिहापयति, एवं पञ्चदशदिने पञ्चदशभागा भवन्ति, एकोऽनावृतोऽवशिष्यते । शुक्लपक्षे त्वेकैकः पञ्चदशभागो वर्धते तेन राकाया पूर्णा षोडशभागा भवन्ति । ज्योतिष्करण्डकेऽपीत्थमेव । अनेन भणितत्रयानुसारेण स्तोको वा घनो वा चन्द्र उद्घाटस्ति इति, न च सर्वं कदापि नित्यराहुणा चन्द्र आव्रियते । आह च चन्द्रविमानस्य पञ्चैकषष्टिभागोनयोजनमानत्वाद्राहुविमानस्य ग्रहविमानत्वेनार्धयोजनमात्रत्वाच्च कथं सर्वात्मनावरणस्य संभव ?, उच्यते, ग्रहविमानानामुक्तप्रमाणस्य प्रायिकत्वाद्राहुविमानमधिकप्रमाणमपि संभाव्यते । अन्ये त्वाहुर्लघीयसोऽपि राहुविमानस्यात्यन्तबहुलेन प्रसर्पता तमिस्ररश्मिजालेन महदपि चन्द्रविमानमाव्रियते । अथवा महदपि चन्द्रविमानमधःस्थायिना लघुनापि राहुविमानेनाच्छादितमधस्तनैर्लोकैर्दृश्यत इति ॥ ६९ ॥ अथ श्वेतकृष्णाभिधे तृतीयचतुर्थे द्वारे आह—

**एवं वड्ढइ चंदो, परिहाणी होइ एव चंदस्स ।**
**कालो वा जोण्हा वा, तेणणुभावेण चंदस्स ॥७०॥**

एव वि० । 'इत्थं' राहुविमानेन प्रतिदिनं क्रमेणाऽनावरणकरणतश्चन्द्रः 'वर्धते' वर्धमानः प्रतिभासते, 'एवं' राहुविमानेन प्रतिदिवस क्रमेणावरणकरणतः परिहाणिप्रतिभासो भवति । चन्द्रस्य विषये 'तेनानुभावेन' तेन कारणेन एकः पक्षः 'काल' कृष्णो भवति यत्र चन्द्रस्य परिहाणिप्रतिभासः, एकस्तु ज्योत्स्नावान् शुक्लपक्षः यत्र चन्द्रविषया वृद्धि प्रति

भामने। 'कालो वा जोण्हा वा' इत्यत्र द्वौ वाशब्दौ तुल्यकक्षताद्योतकौ। अत्र श्वेतपक्षात्पूर्वं कृष्णपक्षाख्यान तद्व्यत्ययकारण जीवाभिगमेऽपि नोक्तम् ॥७०॥ अथ चन्द्रस्य कदा रात्रावुदय कदा दिवसेऽप्युदयस्त द्द्वारद्वय व्याचिख्यासुर्गाथापञ्चकेनाह—

**सूरेण समं उदओ, चंदस्स अमावसीदिणे होइ।**
**तेसिं मंडलमिक्कं, रासी रिक्खं तहिक्कं च ॥ ७१ ॥**

सूरेण०। सूर्येण सार्द्धं सर्वास्वप्यमावास्यासु प्रातश्चन्द्रस्योदयो भवति, तस्मिन दिने चन्द्रसूर्ययोर्मण्डलमेकं भवति, यस्मिन्मण्डले सूर्यस्तदूर्ध्वमेव चन्द्रोऽपि निजमण्डले चरति। तथा तयो राशिर्नक्षत्र चैकमेव, यस्मिन् राशौ नक्षत्रे च सूर्यस्तस्मिंश्चन्द्रोऽपि ॥७१॥ तत किं भवति? इत्याह—

**तत्तो पडिवयवीआइदिणेसु रिक्खाइभेअमावहइ।**
**इक्किकमुहुत्तेण य, सूरा पिट्ठे पडइ चंदो ॥ ७२ ॥**

तत्तो प०। 'तत' तद्दिनानन्तरममावास्यात प्रतिपद्द्वितीयादिदिनेषु चन्द्रो ऋक्षादीना भेद–अन्तरमावहति, नक्षत्रराशिमण्डलेभ्योऽन्तर मा प्नोतीत्यर्थ, तथा च प्रतिदिनमेकैकमुहूर्त्तेन सूर्यात्पृष्ठे पतति ॥७२॥ पुन किं भवति? इत्याह—

**राहू वि अ पइदिअहं, ससिणो इक्किकभागमुज्झइ अ।**
**इअ चंदो वीआइअदिणेसु, पयडो हवइ तम्हा ॥ ७३ ॥**

राहू वि०। राहुरपि प्रतिदिवसमेकैक पञ्चदशभाग 'उज्झइ' त्ति त्यज ति, 'इति' अमुना प्रकारेण चन्द्रोऽपि द्वितीयादिषु दिनेषु तस्मात्प्रकटो भवति। भावना यथा–शुक्लप्रतिपद्युदयस्तथैव, अमावास्यातो मण्डलादी नामन्तर जायते, मन्दगतित्वेन सूर्यान्मुहूर्त्तेनैकेन चन्द्र पृष्ठे पतति, रा

हुग्येव भाग मुञ्चति, पर माय सूर्यरश्म्यावृतत्वेन न तथा मम्यग्दृग्गो चरमायाति। द्वितीयादिने सूर्योदयादनन्तरयेन द्वितीयभागमोचनेन मुहूर्त्त द्विरगम्यक्षेत्रपृष्टपतनेन च माय सूर्याद्दूरत्वाद् दृश्यते. एव सर्वासु शेष-तिथिषु ज्ञेय पूर्णिमा यावत् । गते शीघ्रविभागस्त्वेवम्—सर्वमन्दगति श्चन्द्र , तस्माच्छीघ्रो रवि , तस्माद्ग्रहा , तेभ्यो नक्षत्राणि, ततस्तारा । ग्रहमध्ये तु बुधाच्छुक्र शुक्रान्मङ्गलो मङ्गलाद् बृहस्पतिर्बृहस्पते शनि शीघ्र इति **संग्रहणीवृत्तिवचनम्** ॥७३॥ अथ पूर्णिमाया स्वरूपमाह—

**मयलो वि ससी दिसइ, राहुविमुक्को अ पुरिणमादिअहे।**
**सूरत्थमणे उदश्रो, पुव्वे पुव्वुत्तजुत्तीए ॥ ७४ ॥**

मयलो०। पूर्णिमाया मलोऽपि शशी राहुविमुक्त सन् दृश्यते। सूर्यास्ते पूर्वस्यामुदय प्राप्नोति, 'पूर्वोक्तयुक्त्या' पञ्चदशमुहूर्ते सूर्या त्पृष्ठे पतितत्वेन ॥७४॥ पूर्णिमाया विशेषमाह—

**मासिहरासिहि पुरिणमि, हुंति उ रासीए उभयसत्तमगे ।**
**बहुलपडिवयनिसाए, गए मुहुत्ते हवइ उदश्रो ॥ ७५ ॥**

ममिसू०। सर्वास्वपि पूर्णिमासु शशिसूर्यो परस्पर सप्तमराशौ भवत , सूर्यभोग्यात्सप्तमराशौ चन्द्र , चन्द्रभोग्यात् सप्तमराशौ सूर्य । शुक्लपक्षे दिनोदयस्वरूप प्रोच्याथ सार्धगाथया कृष्णपक्षे चन्द्रस्य रात्रावुदयस्व रूपमाह—'बहुल' ति कृष्णपक्षप्रतिपन्निशाया मुहूर्ते गते चन्द्रस्योदयो भवति ॥ ७५ ॥ तत किं स्यात्? इत्याह—

**एव मुहुत्तवुड्ढी, भागं चायरइ पइदिणं राहू ।**
**तेण अमावस्साए, होइ तहा ज पुरा वुत्तं ॥ ७६ ॥**

एव मु०। 'एव' अमुना प्रकारेण मुहूर्तवृद्धिर्भवति, यथा कृष्णाद्वितो-

याया मुहूर्त्तद्वये गते चन्द्रोदयो यावदमावास्याया पञ्चदशमुहूर्त्तवृद्धि । राहुरपि प्रतिदिवस पञ्चदशभागमावृणोति 'तेन' कारणेनामावास्याया तथाभवति तत्पुरा प्रोक्त—सूर्येण सममुदयमित्यादिक सर्वम्। अत्र किञ्चिद्दिनमानापेक्षया उदयवेलाया न्यूनत्वमधिकत्व वा चिन्त्यम्। किञ्च रात्रेर्यावद्भिर्मुहूर्त्तैरुदयस्तावद्भिर्मुहूर्त्तैर्द्वितीयदिवसेऽस्तमयनमपि भाव्यम् ॥ ७६ ॥ अथ पर्वराहुस्वरूपमाह—

**ससिसूराणं गहणं, सङ्कतिवरिसाइयालवरिसेहिं ।**
**उक्कोसओ कमेणं, जहन्नओ मासछक्केणं ॥ ७७ ॥**

ससिसू० । य पर्वराहु स पूर्णिमारात्रौ चन्द्रविमान तथाऽमावास्या दिने सूर्यविमान तिरोधत्ते, तस्मिंस्तिरोहिते ग्रहणमिति रूढि । तच्च ग्रहण चन्द्रसूर्ययो क्रमेणोत्कृष्टत सार्द्धवर्षत्रयेण चन्द्रस्याष्टचत्वारिंशद्वर्षै सूर्यस्य च भवति। जघन्यत पुनरनयोर्मासषट्केनैवेति स्थिति ॥७७॥ अथ ग्रहणस्य पुनर्विशेषमाह—

**ससिणो वा रविणो वा, जइआ गहणं तु होइ एगस्स ।**
**तइआ तं सव्वेसिं, ताणं नेअं मणुअलोए ॥ ७८ ॥**

ससिणो० । यदाकदाचिदेकस्य शशिनो रवेर्वा ग्रहण भवति तदा सर्वेषा चन्द्राणा सूर्याणा च मनुष्यलोके समक जायते, एकस्य चन्द्रस्य तदा सर्वेषा चन्द्राणाम् , एकस्य सूर्यस्य तदा सर्वेषा सूर्याणा नरक्षेत्रवर्तिना भवति, यत सर्वेषामप्येकनक्षत्रराशिस्थितिमत्त्वात्समश्रेणिव्यवस्थितत्वाच्च । न चेद स्वमनीषया लिखित किन्त्वनुयोगद्वारवृत्त्यादौ तथैव दर्शनात् , तथा च तद्वृत्ति —" चन्द्रसूर्योपरागा — राहुग्रहणानि, बहुवचन चात्रार्द्धतृतीयद्वीपसमुद्रवर्तिचन्द्रार्काणा युगपदु-

परगभावान्मन्तव्यमिति । यच्च जीवाभिगमादावन्त्यद्वीपादियौगलिक क्षेत्रेषु चन्द्रार्कोपरागाभाव प्रोक्तस्तत्तु तज्जयाजन्यामभवस्तत्र ज्ञायते । यद्वा तेषा पुण्यानुभावाद् ग्रहणादर्शनमपि सभाव्यते पर न ग्रहणाभव. तत्रापि चन्द्रादित्याना चारत्वेन ॥ ७८ ॥ अथ चन्द्रार्को कदा दक्षिणचारिण कदोत्तरचारिणश्च भवन्ति ? इत्याह—

कक्काइमिआइसु छसु, रासीसुं दाहिणुत्तरा कमसो ।
मासेण हुंति ससिणो. सूरा संवच्छरेण पुणो ॥ ७९ ॥

कक्का० । कर्कादिषट्सु राशिषु—कर्क १ सिंह २ कन्या ३ तुला ४ वृश्चिक ५ धनुर्ष ६ वर्तमानाश्चन्द्रार्को दक्षिणचारिणो भवन्ति, उत्तरमण्डलेभ्य क्रमेण दक्षिणमण्डलेषु गच्छन्ति । मृगादिषट्सु चमकर १ कुम्भ २ मीन ३ मेष ४ वृष ५ मिथुनेषु ६ वर्तमानाश्चन्द्रार्को उत्तरचारिणो भवन्ति । बहुवचनमत्र सकलचन्द्रार्कापेक्षम्, यत सर्वेऽपि सूर्याश्चन्द्रा वा दक्षिणोत्तरचारिण समकालमेव भवन्ति, एकराश्यवस्थानात् । तत्र विशेषमाह—एकेन मासेन चन्द्रा दक्षिणोत्तरचारिण, सूर्या पुन सवत्सरेण दक्षिणोत्तरचारिणो भवन्ति । अत्र मासो नक्षत्रमासो ग्राह्य, स च सप्तविंशतिर्दिनान्येकविंशतिसप्तषष्टिभागा श्चेति २७ २१/६७ प्रमाण, तदर्धेन १३ ४४/६७ चन्द्रस्य दक्षिणायनमर्धेन चोत्तरायणम् । यतश्चन्द्र १ चन्द्र २ अभिवर्धित ३ चन्द्र ४ अभिवर्धित ५ नामान सवत्सरा ५, ते च त्रिशदधिकाष्टादशशत दिनमध्ये युगे पञ्च भवन्ति । नवकोनत्रिशद्दिनमाना सद्वात्रिंशद द्वाषष्टिभागाश्चन्द्रमासा द्वाषष्टि, सार्धत्रिंशद्दिनमाना सूर्यमासा षष्टि, सप्तविंशतिदिनमाना सप्तविंशति सप्तषष्टिभागा नक्षत्रमासा

सप्तषष्टिर्युगे। तेन युगे चन्द्रस्य दक्षिणायनानि सप्तषष्टिः, उत्तरायणान्यपि सप्तषष्टि, सर्वाणि युगे १३४ चन्द्रायणानि। तथा सूर्यस्य युगे दशायनानि, तत्र पञ्च दक्षिणायनानि पञ्चैवोत्तरायणानि। त्र्यशीत्यधिकशतदिनानामेकैकमयनं १८३, तद्दशगुणं युगं १८३० दिनप्रमाणम्। तथा सूर्यः सर्वाभ्यन्तरे मण्डले दिनमेकं चरति, सर्वबाह्येऽपि दिनमेकम्, शेषेषु मण्डलेषु प्रवेशनिर्गमाभ्यां दिनद्वयम्, अतः प्रथमचरमदिनन्यूनत्वे सूर्यसंवत्सरे ३६६ दिनानि, स च पञ्चगुणितोऽष्टादशशतानि त्रिंशदधिकानि। युगस्य चादिः श्रावणसितप्रतिपदि, उक्तं हि—" सावणबहुलपडिवए, बालवकरणे अभीइनक्खत्ते। सव्वत्थ पढमसमए, जुगस्स आइं वियाणाहि ॥१॥" सर्वत्रेति भरतैरावतविदेहेषु भाव्यम्। अवसर्पिण्यां षण्णामरकाणामप्यादिरत्रैव। विदेहेषु यद्यप्यरकाणामभावस्तथापि पञ्चवत्सरात्मकस्य युगस्य सद्भावात्। मासपञ्चकवर्षपञ्चकस्वरूपं श्रीमुनिचन्द्रसूरिकृतकालशतक-प्रवचनसारोद्धारादिग्रन्थेभ्योऽवसेयम्। दिनादिसंख्या तु यन्त्रकद्वयादवधार्या—

| २९ | ३० | २७ | ३१ | ३० | दिनसंख्या. |
|---|---|---|---|---|---|
| ३२ | ३१ | २१ | १२१ | ० | भागा. |
| ६२ | ६२ | ६७ | १२४ | ० | भागकरणांका. |
| चन्द्रमास | सूर्यमास. | नक्षत्रमास | अभिवर्धितमास. | ऋतुमास. | पञ्चमासनाम. |
| ६२ | ६० | ६७ | २ | ६१ | युग मासाना संख्या. |

| ३५४ | ३५४ | ३८३ | ३५४ | ३८३ | दिनसख्या |
|---|---|---|---|---|---|
| १२ | १२ | ४४ | १२ | ४४ | आगतभागसख्या |
| ६२ | ६२ | ६२ | ६२ | ६२ | भागकरणाका |
| चन्द्रसव त्सर | चन्द्रसव त्सर | अभिवर्धित-सवत्सर | चन्द्रसव त्सर | अभिवर्धित-सवत्सर | पचवर्षैरको युग तत्र |
| मास १२ | मास १२ | मास १३ | मास १२ | मास १३ | दिन १८३० |

किञ्च सर्वबाह्यमण्डलस्थस्य पुष्यस्य भोग सूर्याचन्द्रमसोस्सर्वाभ्य न्तरमण्डलस्थयो स्यात् । तथा सर्वाभ्यन्तरमण्डलस्थिताभिजिद्भोग सर्वबाह्ये मण्डले तयो स्यादित्यत्रायनापेक्षो भोगो न तु मण्डलैरत्र कारणम् । **स्थानाङ्गे नवमाध्ययन**प्रान्तेऽपि—" अभिई सवण धणिट्ठा, रेवइ असिणी मिगसिर पूसो । हत्थो चित्ता य तहा, पच्छ भागा णव हवति ॥ १ ॥" एतद्वृत्ति —'पच्छभाग' त्ति पश्चाद्भा गश्चन्द्रेण भोगो येषा तानि पश्चाद्भागानि, चन्द्रोऽतिक्रम्य यानि भुङ्क्ते पृष्ठ दत्त्वेत्यर्थ । इत्यादि दृश्यम् ॥ ७९ ॥ चन्द्रसूर्ययोर्मण्डलादि स्वरूप प्रकाश्याथ नक्षत्रतारकयो स्वरूपमाह—

**अट्ठेव मंडलाइं, णक्खत्ताणं जिणेहिं भणिआइं ।**
**दो मंडलाइ दीवे, मंडलछक्कं च लवणम्मि ॥ ८० ॥**

अट्ठे० । अष्टावेव मण्डलानि नक्षत्राणा जिनेन्द्रैर्भणितानि । तत्र द्वे मण्डले जम्बूद्वीपे, मण्डलषट्क च लवणोदे । यच्चन्द्रमसस्सर्वाभ्यन्त रमण्डल तन्नक्षत्राणामपि सर्वाभ्यन्तर मण्डलम्, यच्चन्द्रमसस्सर्वबाह्य

मण्डलं तन्नक्षत्राणामपि सर्वबाह्यं मण्डलम् । यदुक्तं जम्बूद्वीपप्रज्ञप्याम्—" जम्बुद्दीवे दीवे णं भंते ! केवइअं ओगाहेत्ता नक्खत्तमण्डला पण्णत्ता ? गोअमा ! जंबुद्दीवे दीवे असीइसयं ओगाहेत्ता एत्थ णं दो नक्खत्तमण्डला, लवणसमुद्दे वि तिन्नि तीसे जोअणसए ओगाहेत्ता एत्थ णं छ नक्खत्तमण्डला पन्नत्ता । सव्वब्भंतराओ णं णक्खत्तमण्डलाओ केवइए अबाहाए सव्वबाहिरए णक्खत्तमण्डले पन्नत्ते ? गोअमा ! पंचदसुत्तरजोअणसए अबाहाए णक्खत्तमण्डले पन्नत्ते । " इति ॥ ८० ॥ अथ केषु केषु मण्डलेषु नक्षत्राणि सन्ति ? इति गाथापञ्चकेनाह—

अभिइ सवण धणिट्ठा, सयभिस पुव्वुत्तरा य भद्दवया ।
रेवइ अस्सिणि भरणी, पुव्वुत्तरफग्गुणीओ अ ॥ ८१ ॥
तह साई बारसमा, अब्भंतरए उ मंडले ससिणो ।
तइए पुणव्वसु मघा, छट्ठे पुण कत्तिआ एका ॥ ८२ ॥
रोहिणि चित्ता सत्तमि, विसाहिया होइ अट्ठमे एगा ।
दसमे पुण अणुराहा, एगारसमे पुणो जेट्ठा ॥ ८३ ॥
मिगसिर अद्दा पुस्सो, असेसा तह य हत्थमूलाणि ।
पुव्वुत्तरसड्ढाओ, इमाणि अड हुंति पनरसमे ॥ ८४ ॥

अभि० । अभिजित् १ श्रवण २ धनिष्ठा ३ शतभिषक् ४ पूर्वभद्रपदा ५ उत्तरभद्रपदा ६ रेवती ७ अश्विनी ८ भरणी ९ पूर्वाफल्गुनी १० उत्तराफाल्गुनी ११ ॥ ८१ ॥ तह० । तथा स्वातिर्द्वादश १२, एतानि द्वादश नक्षत्राणि चन्द्रस्य सर्वाभ्यन्तरे मण्डले सन्ति इदं नक्षत्रमण्डलं प्रथमं सर्वाभ्यन्तरम् १ । तृतीये चन्द्रमण्डले पुनर्व

१ मघा २ द्वे नक्षत्रे, द्वितीयं नक्षत्रमण्डलम् । षष्ठे चन्द्रमण्डले एका कृत्तिका, तृतीयं नक्षत्रमण्डलमेतत् ॥ ८२ ॥ रोहि० । सर्वाभ्यन्तरात्सप्तमे चन्द्रमण्डले रोहिणी १ चित्रे २ द्वे, नक्षत्रमण्डलं चतुर्थम् । सर्वाभ्यन्तरादष्टमे चन्द्रमण्डले एका विशाखा, नक्षत्रमण्डलं पञ्चमम् ५ । सर्वाभ्यन्तरान्मण्डलात्पुनर्दशमेऽनुराधा, नक्षत्रमण्डलं षष्ठम् ६ । एकादशे चन्द्रमण्डले ज्येष्ठा, नक्षत्रमण्डलं सप्तमम् ७ ॥ ८३ ॥ मिग० । मृगशीर्ष १ आर्द्रा २ पुष्य ३ अश्लेषा ४ हस्त ५ मूल ६ पूर्वाषाढा ७ उत्तराषाढा ८ एतान्यष्टौ नक्षत्राणि सर्वबाह्ये पञ्चदशे चन्द्रमण्डले सन्ति, नक्षत्रमण्डलमष्टमम् ॥ ८४ ॥ अथ येषु चन्द्रमण्डलेषु नक्षत्राणि न सन्ति तान्याह—

**सेसेसु मंडलेसुं, सत्तसु ससिणो न हुंति रिक्खाणि ।**
**अट्ठसु हवंति ताणं, अट्ठेव य मंडलाणि तओ ॥ ८५ ॥**

सेसे० । 'शेषेषु' द्वितीयचतुर्थपञ्चमनवमद्वादशत्रयोदशचतुर्दशसंज्ञेषु सप्तसु चन्द्रमण्डलेषु नक्षत्राणि न सन्ति । पूर्वोक्तेष्वष्टसु चन्द्रमण्डलेषु नक्षत्राणि सन्ति, 'ततः' तस्मात्कारणात्तेषामष्टावेव मण्डलानि भवन्ति ॥ ८५ ॥ अथ नक्षत्रमण्टलानामवस्थितत्वमाह—

**रिक्खाणि मंडले जाणि जम्मि वुत्ताणि ताणि तत्थेव ।**
**निच्चं चरंति चंदाईयं भोगं तह उ विंति ॥ ८६ ॥**

रिक्खा० । यानि नक्षत्राणि यस्मिन्मण्टले उक्तानि तानि तत्रैव 'नित्यं' आ कालं चरन्ति, तत्तन्निजं निजं मण्टलं त्य[illegible] गच्छन्ति । चन्द्रादीनामुपभोग्यानि, आदिशब्दा[illegible] अष्टाविंशतिनक्षत्राणां मध्ये द्वादश नक्षत्राणि ,

चन्द्रस्योत्तरेणोत्तरस्यां दिशि व्यवस्थितानि सदा योगं युञ्जन्ति। योगः किम्? उच्यते, नक्षत्रसीमावर्तिना चन्द्रेण सह नक्षत्राणां सम्बन्धो योगः। अष्टौ नक्षत्राणि सर्वबाह्यमण्डलस्थानि चन्द्रस्य दक्षिणस्यां दिशि व्यवस्थितानि सदा योगं युञ्जन्ति। सर्वाभ्यन्तरसर्वबाह्ये नक्षत्रमण्डले त्यक्त्वा शेषाणि षण्मध्यमण्डलस्थान्यष्टौ नक्षत्राणि कदाचिदुत्तरयोगीनि कदाचिद्दक्षिणयोगीनि कदाचित्प्रमर्दयोगीन्यपि। प्रमर्दमिति कोऽर्थः? तेषां नक्षत्राणां मध्येन भूत्वा चन्द्रो व्रजति गच्छतीति समवायाङ्गे प्रोक्तम् ॥ ८६ ॥ अथ किं नक्षत्रं कति मुहूर्तानि चन्द्रेण सह चरति? तत्र प्रथममभिजिन्नक्षत्रमाह—

**अभिइस्स चंदजोगो, सत्तट्ठीखंडिओ अहोरत्तो।**
**ते हुंति नव मुहुत्ता, सत्तावीसं कलाओ अ ॥ ८७ ॥**

अभिइस्स०। अभिजिन्नक्षत्रस्य चन्द्रेण सह योगः सप्तषष्टिभागीकृतमहोरात्रगम्यक्षेत्रं तस्यैकविंशतिर्भागाः क्षेत्रतः, कालतो नव मुहूर्ता एकस्य मुहूर्तस्य च सप्तविंशतिः सप्तषष्टिभागाः। तथाहि—सर्वेषामपि नक्षत्राणां सीमा विष्कम्भतः पूर्वापरतश्चन्द्रस्य नक्षत्रभुक्तिक्षेत्रविस्तारो नक्षत्रेणाहोरात्रगम्यक्षेत्रस्य सप्तषष्ट्या भागैर्मितो विभक्तः समच्छेद प्रज्ञप्तः। भागान्तरेण तु भज्यमानस्य नक्षत्रसीमाविष्कम्भस्य विषमच्छेदता भवति, भागान्तरेण न शक्नुं शक्यत इत्यर्थः। ततो नक्षत्रेणाहोरात्रगम्यक्षेत्रस्य सप्तषष्टिभागीकृतस्यैकविंशतिर्भागा अभिजिन्नक्षत्रस्य क्षेत्रतः सीमा विष्कम्भो भवति, एतावति क्षेत्रे चन्द्रेण सह तस्य योगो व्यपदिश्यते। तदनु श्रवणेन सह योगः, शीघ्रगामित्वेनाभिजितोऽग्रे गमनात्। तथाप्यामेवैकविंशतौ त्रिंशन्मुहूर्त्तं चाहोरात्रस्य त्रिंशता गुणितायां

१ मघा २ इे नक्षत्रे, द्वितीयं नक्षत्रमण्डलम् । षष्ठे चन्द्रमण्डले एका कृत्तिका, तृतीयं नक्षत्रमण्डलमेतत् ॥ ८२ ॥ रोहि० । सर्वाभ्यन्तरात्सप्तमे चन्द्रमण्डले रोहिणी १ चित्रे २ इे, नक्षत्रमण्डलं चतुर्थम् । सर्वाभ्यन्तरादष्टमे चन्द्रमण्डले एका विशाखा, नक्षत्रमण्डलं पञ्चमम् ५ । सर्वाभ्यन्तरान्मण्डलात्पुनर्दशमेऽनुराधा, नक्षत्रमण्डलं षष्ठम् ६ । एकादशे चन्द्रमण्डले ज्येष्ठा, नक्षत्रमण्डलं सप्तमम् ७ ॥ ८३ ॥ मिग० । मृगशीर्ष १ आर्द्रा २ पुष्य ३ अश्लेषा ४ हस्त ५ मूल ६ पूर्वाषाढा ७ उत्तराषाढा ८ एतान्यष्टौ नक्षत्राणि सर्वबाह्ये पञ्चदशे चन्द्रमण्डले सन्ति, नक्षत्रमण्डलमष्टमम् ॥ ८४ ॥ अथ येषु चन्द्रमण्डलेषु नक्षत्राणि न सन्ति तान्याह—

**सेसेसु मंडलेसुं, सत्तसु ससिणो न हुंति रिक्खाणि ।**
**अट्ठसु हवंति ताणं, अट्ठेव य मंडलाणि तश्रो ॥ ८५ ॥**

सेसे० । 'शेषेषु' द्वितीयचतुर्थपञ्चमनवमद्वादशत्रयोदशचतुर्दशसंज्ञेषु सप्तसु चन्द्रमण्डलेषु नक्षत्राणि न सन्ति । पूर्वोक्तेष्वष्टसु चन्द्रमण्डलेषु नक्षत्राणि सन्ति, 'ततः' तस्मात्कारणात्तेषामष्टावेव मण्डलानि भवन्ति ॥ ८५ ॥ अथ नक्षत्रमण्डलानामवस्थितत्वमाह—

**रिक्खाणि मंडले जाणि जम्मि वुत्ताणि ताणि तत्थेव ।**
**निच्चं चरंति चंदाईणं भोगं तह उ विंति ॥ ८६ ॥**

रिक्खा० । यानि नक्षत्राणि यस्मिन्मण्डले उक्तानि तानि तत्रैव 'नित्यं' आ कालं चरन्ति, तत्तन्निजं निजं मण्डलं त्यक्त्वा नान्यत्र मण्डले गच्छन्ति । चन्द्रादीनामुपभोग्यानि, आदिशब्दात्सूर्यग्रहाणां ग्रहः । अष्टाविंशतिनक्षत्राणां मध्ये द्वादश नक्षत्राणि सर्वाभ्यन्तरमण्डलस्थानि

चन्द्रस्योत्तरेणोत्तरस्यां दिशि व्यवस्थितानि सदा योगं युञ्जन्ति । योगः किम्? उच्यते, नक्षत्रसीमावर्तिना चन्द्रेण सह नक्षत्राणां संबन्धो योगः। अष्टौ नक्षत्राणि सर्वबाह्यमण्डलस्थानि चन्द्रस्य दक्षिणस्यां दिशि व्यवस्थितानि सदा योगं युञ्जन्ति । सर्वाभ्यन्तरसर्वबाह्ये नक्षत्रमण्डले त्यक्त्वा शेषाणि षण्मध्यमण्डलस्थान्यष्टौ नक्षत्राणि कदाचिदुत्तरयोगीनि कदाचिद्दक्षिणयोगीनि कदाचित्प्रमर्दयोगीन्यपि । प्रमर्दमिति कोऽर्थः? तेषां नक्षत्राणां मध्येन भूत्वा चन्द्रो व्रजति गच्छतीति **समवायाङ्गे** प्रोक्तम् ॥ ८६ ॥ अथ किं नक्षत्रं कति मुहूर्तानि चन्द्रेण सह चरति? तत्र प्रथममभिजिन्नक्षत्रमाह---

**अभिइस्स चंदजोगो, सत्तट्ठीखंडिओ अहोरत्तो ।**
**ते हुंति नव मुहुत्ता, सत्तावीसं कलाओ य ॥ ८७ ॥**

अभिइस्स० । अभिजिन्नक्षत्रस्य चन्द्रेण सह योगः सप्तषष्टिभागीकृतमहोरात्रगम्यक्षेत्रं तस्यैकविंशतिर्भागाः क्षेत्रतः, कालतो नव मुहूर्ता एकस्य मुहूर्तस्य च सप्तविंशतिः सप्तषष्टिभागाः । तथाहि---सर्वेषामपि नक्षत्राणां सीमा विष्कम्भतः पूर्वापरतश्चन्द्रस्य नक्षत्रभुक्तिक्षेत्रविस्तारो नक्षत्रेणाहोरात्रगम्यक्षेत्रस्य सप्तषष्ट्या भागैर्भाजितो विभक्तः समच्छेदः प्रज्ञप्तः । भागान्तरेण तु भज्यमानस्य नक्षत्रसीमाविष्कम्भस्य विषमच्छेदता भवति, भागान्तरेण न वक्तुं शक्यत इत्यर्थः । ततो नक्षत्रेणाहोरात्रगम्यक्षेत्रस्य सप्तषष्टिभागीकृतस्यैकविंशतिर्भागा अभिजिन्नक्षत्रस्य क्षेत्रतः सीमा विष्कम्भो भवति, एतावति क्षेत्रे चन्द्रेण सह तस्य योगो व्यपदिश्यते । तदनु श्रवणेन सह योगः, शीघ्रगामित्वेनाभिजितोऽग्रे गमनात् । तथास्यामेकविंशतौ त्रिंशन्मुहूर्तत्वादहोरात्रस्य त्रिंशता गुणितायां

जातानि षट् शतानि त्रिंशदधिकानि ६३०, तेषां सप्तषष्ट्या भागहारे नव मुहूर्त्ता सप्तविंशतिश्च सप्तषष्टिभागा ९$\frac{२७}{६७}$ ॥ ८७ ॥ अथ पञ्च दशमुहूर्त्तयोगीनि षण्नक्षत्राण्याह—

**सयभिसया भरणीओ, अद्दा अस्सेस साइ जिट्ठा य ।**
**एए छन्नक्खत्ता, पन्नरसमुहुत्तसंजोगा ॥ ८८ ॥**

सय० । शतभिषक् १ भरणी २ आर्द्रा ३ अश्लेषा ४ स्वाति ५ ज्येष्ठा ६ चैतानि षट नक्षत्राणि प्रत्येकं चन्द्रेण सह पञ्चदशमुहूर्त्त संयोगीनि । तथाहि—एतेषां षण्णां नक्षत्राणां प्रत्येकं सप्तषष्टिखण्डी कृतस्याहोरात्रस्याहोरात्रस्य सार्द्धास्त्रयस्त्रिंशद्भागान् $\frac{३३}{६७}$ $\frac{१}{२}$ यावच्चन्द्रेण सह योग । तत कालमानाय मुहूर्त्तभागकरणार्थं त्रयस्त्रिंशत्रिंशता गुण्यते जात ९९०, अर्द्धस्त्रिंशद्गुणित पञ्चदश भवन्ति, तेषां पञ्च दशानां क्षेपे जात पञ्चोत्तर सहस्र १००५, एतस्य सप्तषष्ट्या भाग हरणे लब्धा पञ्चदशमुहूर्त्ता १५. तदेषां कालसीमा ॥ ८८ ॥ अथ पञ्चचत्वारिंशन्मुहूर्त्तयोगीनि षण्नक्षत्राण्याह—

**तिन्नेव उत्तराइ, पुणव्वसू रोहिणी विसाहा य ।**
**एए छन्नक्खत्ता, पणयालमुहुत्तसंजोगा ॥ ८९ ॥**

तिन्ने० । 'तिस्र उत्तरा' उत्तराफाल्गुन्य १ उत्तराषाढा २ उत्तरा भद्रपदा ३ श्च पुनर्वसु ४ रोहिणी ५ विशाखा ६ एतानि षण्नक्षत्राणि प्रत्येकं चन्द्रेण सह पञ्चचत्वारिंशन्मुहूर्त्तसंयोगीनि भवन्ति । तथाहि—एतेषां सप्तषष्टिखण्डीकृतस्याहोरात्रस्य सम्बन्धिना भागाना शतमेकमेक-भागस्यार्द्धं यावच्चन्द्रेण सार्द्ध क्षेत्रसीमायोग । तत्रैषां भागानां मुहूर्त्तगत करणार्थं भागशत भागस्यैकस्यार्द्ध $\frac{१००}{६७}$ $\frac{१}{२}$ त्रिंशता गुण्यते जातानि पञ्च

दशोत्तराणि त्रीणि सहस्राणि ३०१०, एतेषां सप्तषष्ट्या भागहारे लब्धाः पञ्चचत्वारिंशन्मुहूर्तास्तदेषां कालसीमा ॥८९॥ अथ त्रिंशन्मुहूर्त्तचन्द्रयोगीनि पञ्चदशनक्षत्राण्याह—

**अवसेसा नक्खत्ता, पन्नरस हवंति तीसइ मुहुत्ता ।**
**चंदम्मि एस जोगो, नक्खत्ताणं मुणेयव्वो ॥ ९० ॥**

अव० । 'अवशेषाणि' उक्तत्रयोदशव्यतिरिक्तानि श्रवण १ धनिष्ठा २ पूर्वभद्रपदा ३ रेवती ४ अश्विनी ५ कृत्तिका ६ मृगशिरः ७ पुष्य ८ मघा ९ पूर्वफाल्गुन्यः १० हस्त ११ चित्रा १२ मूल १३ अनुराधा १४ पूर्वाषाढा १५ एतन्नामानि पञ्चदशापि नक्षत्राणि चन्द्रेण सह प्रत्येकं त्रिंशन्मुहूर्त्तसंयोगीनि भवन्ति । तथाहि—एतेषां नक्षत्राणां प्रत्येकं परिपूर्णानां सप्तषष्टिभागानां क्षेत्रसीमाविष्कम्भः, ते च त्रिंशद्गुणिता जाते द्वे सहस्रे दशोत्तरे, ते च सप्तषष्ट्या भागे हृते लब्धास्त्रिंशदेव, तदेषां त्रिंशन्मुहूर्ताः कालसीमाप्रमाणम् । सूर्यस्यापि नक्षत्रयोगो गाथाभिरिमाभिर्ज्ञेयः—"अभिइ छ च मुहुत्ते, चत्तारि अ केवले अहोरत्ते । सूरेण समं गच्छइ, इत्तो सेसाण वुच्छामि ॥ १ ॥ सयभिसया भरणीओ, अद्दा अस्सेस साइ जिट्ठा य । वच्चंति मुहुत्तेक्वीसइ छ चेवऽहोरत्तो ॥ २ ॥ तिन्नेव उत्तराइं, पुणव्वसू रोहिणी विसाहा य । वच्चंति मुहुत्ततिगे, चेव वीसं अहोरत्ते ॥ ३ ॥ अवसेसा णक्खत्ता, पन्नरस सूरं सह गया जंति । बारस चेव मुहुत्ते, तेरस पुण्णे अहोरत्ते ॥ ४ ॥९०॥ अथ नक्षत्रपटले सर्वमध्ये किम्, उपरि किम्, अधश्च किं नक्षत्रम्? इत्याह—

**सव्वब्भंतर अभिई, मूलं पुण सव्वबाहिरे होई ।**
**सव्वोवरिं तु साई, भरणी सव्वस्स हिट्ठिम्मि ॥ ६१ ॥**

सव्व० । उत्तरस्यां दिशि जगतीतोऽशीत्यधिकशते सर्वाभ्यन्तरे मण्डलेऽभिजिन्नक्षत्रम् । पुनः सर्वबाह्ये मण्डले दक्षिणस्यां दिशि मूलं सदाप्यवस्थितं चरति, तत्र मण्डलेऽष्टौ नक्षत्राणि सन्ति, परं चन्द्र-मण्डलं षट्पञ्चादेकषष्टिभागप्रमाणम्, नक्षत्रविमानं तु क्रोशमेकमेव, ततो मण्डलविष्कम्भप्रान्ते मूलम्, शेषाणि तन्मण्डलस्थान्यपि किंचि-दर्वाक् संभाव्यन्ते । एवमभिजिदपि द्वादशसु सर्वाभ्यन्तरे ज्ञेयम् । ऊर्ध्वाधश्च चतुर्योजने नक्षत्रपटले सर्वेषां नक्षत्राणामुपरि स्वातिनक्षत्रम्, सर्वेभ्योऽपि नक्षत्रेभ्योऽधस्तनं भरणी नक्षत्रं चरति ॥ ९१ ॥ अथ तारकाणां स्वरूपमाह—

**रिक्खाण व ताराण वि, मंडलगाइं अवट्ठियाइँ सया ।**
**येअन्वाइं णवरं, संपइ अपसिद्धसंखाइं ॥ ६२ ॥**

रिक्खा० । नक्षत्राणामिव तारकाणामपि मण्डलानि सदाप्यवस्थि-तानि ज्ञातव्यानि, प्रतिनियते निजे निज एव मण्डले सञ्चरणात् । न चैवमाशङ्कनीयमेषां गतिर्न, यतस्तेऽपि प्रदक्षिणया जम्बूद्वीपगतमेरुमे-वानुलक्षीकृत्य परिभ्रमन्ति, न च दक्षिणोत्तरगाः । ये दक्षिणचारिणो ये चोत्तरचारिणस्ते सर्वदा तथैव । तेषां मण्डलादिसंख्या सांप्रतीन-शास्त्रे न दृश्यते ॥ ९२ ॥ अथ भूमितः कियदूर्ध्वं ज्योतिश्चक्रं चरति तदाह—

**समभूतला उ अट्ठहिं, दसूणजोअणसएहिं आरब्भ ।**
**उवरि दसुत्तरजोअण, सयम्मि चिट्ठन्ति जोइसिया ॥६३॥**

सम० । समात्—मेरुमध्यस्थितात्प्रदेशात्मकरुचकसमानाद्भूतलाद्-ष्टाभ्यो दशोनयोजनशतेभ्य आरभ्योपरि दशोत्तरे योजनशते ११० ज्योतिष्कास्तिष्ठन्ति । तथाहि—" शतानि सप्त गत्वोर्ध्वं, योजनाना भुवस्तलात् । नवतिं च स्थितास्तारा, सर्वाधस्तान्नभस्तले ॥ १ ॥ तारकापटलाद्गत्वा, योजनाना दशोत्तरे । सूर्याणा पटल तस्मादशीतिं शीतरोचिषाम् ॥ २ ॥ चत्वारि च ततो गत्वा, नक्षत्रपटलं स्थितम् । गत्वा ततोऽपि चत्वारि, बुधाना पटल भवेत् ॥ ३ ॥ शुक्राणा च गुरूणा च, भौमाना मन्दसञ्ज्ञिनाम् । त्रीणि त्रीणि च गत्वोर्ध्वं, क्रमेण पटल स्थितम् ॥ ४ ॥ " बहुत्व चात्र सर्वद्वीपसमुद्रवर्त्तिज्योतिश्चक्रापेक्ष मन्तव्यम् । यन्त्र चात्रायधार्यम्—

| तारा | सूर्य | चन्द्र | नक्षत्र | बुध | शुक्र | बृहस्पति | मगल | शनि |
|---|---|---|---|---|---|---|---|---|
| यो.७९० | ८०० | ८८० | ८८४ | ८८८ | ८९१ | ८९४ | ८९७ | ९०० |

अमीषामङ्काना मीलने जात दशोत्तर ११० शतम् । इद तूर्ध्वाधःप्रमाणम् ॥ ९३ ॥ अथ तिर्यक्तारकाणा प्रचारमाह—

**इकारसजोअणसय, इगवीसिकारसाहिआ कमसो ।**
**मेरुअलोगाबाहिं, जोइसचक्कं चरइ ठाइ ॥ ९४ ॥**

इकारस० । एकादशयोजनशतान्येकविंशत्यधिकानि मेरौ अबाधा–अन्तरं कृत्वा, एतावद्भिर्योजनैर्मेरुं दूरं विमुच्येत्यर्थ, चल ज्योतिश्चक्र मनुष्यलोके परिभ्रमति । तथैकादशयोजनशतान्येकादशाधिकान्यलोकाकाशस्याऽबाधयाऽचल ज्योतिश्चक्र तिष्ठति । शेषमेरुष्वपि समभावनेत्थमेव । इद तु जम्बूद्वीपतारकापेक्षम्, चन्द्रसूर्यनक्षत्राणा तु

जम्बूद्वीपमेरुत ४४८२० योजने समन्ताद्दूरे परिभ्रमणम्, नैतेभ्यो योजनेभ्योऽर्वाक्कदाप्यागमन भवति। तारकाणा चान्तर द्विधा–व्याघातज निर्व्याघातज च। एकैक द्विधा–उत्कृष्ट जघन्य च। तत्रोत्कृष्ट-व्याघाते पर्वतादिस्खलने मेरुमपेक्ष्य भावनीयम्, यथा–मेरुर्दशसहस्र योजनात्मक, तस्य चोभयतोऽबाधया प्रत्येकमेकविंशत्यधिकान्येकादश शतानि ११२१, तत सर्वमीलने योजनाना द्वादशसहस्रा द्वे च शते द्विचत्वारिंशदधिके १२२४२। जघन्य तु निषधनीलवत्कूटाद्यपेक्षम्, यथा–निषधपर्वत स्वतोऽप्युच्चश्चत्वारि योजनशतानि, तस्य चोपरि पञ्चयोजनशतोच्चानि कूटानि, तान्यधश्चायामविष्कम्भाभ्या पञ्चयोजन शतानि, मध्ये त्रीणि शतानि पञ्चसप्तत्यधिकानि ३७५, उपरि चार्ध तृतीयानि योजनशतानि २५०, एतेषा कूटानामुपरितनसमश्रेणिप्रदेशे तथाजगत्स्वाभाव्यादष्टौ योजनान्युभयतोऽबाधया कृत्वा ताराविमानानि परिभ्रमन्तीति जघन्यतो व्याघातजमन्तर द्वे योजनशते षट्षष्टयधिके २६६। तथोत्कृष्ट तु निर्व्याघातज क्रोशद्वयम्, जघन्य पञ्चधनु शतानि तारतारयोरन्तरम्। उक्त हि **संग्रहण्याम्**–"तारस्स य तारस्स य, जबुद्दीवम्मि अन्तर गुरुअ। बारसजोयणसहस्सा, दुन्नि सया चेव बायाला॥ १॥ छावट्ठा दो अ सया, जहन्नमेअ तु होइ वाघाए। निव्वाघाए गुरुलहु, दोगाउ धणुसया पच॥ २॥"॥ ९४॥ अथ लवणसमुद्रे षोडशयोजनसहस्रोच्चाया शिखाया चरता चन्द्रसूर्यादिज्योतिष्काणा कथ न व्याघात ? तन्निर्वचनमाह—

**जोइसिअविमाणाइं, सव्वाइं हवंति फालिअमयाइं।**
**दगफालिआमया पुण, लवणे जे जोइसविमाणा॥९५॥**

ओइ० । इह लवणसमुद्रवर्जेषु शेषेषु द्वीपसमुद्रेषु यानि ज्योतिष्क विमानानि तानि सर्वाण्यपि सामान्यस्फटिकमयानि भवन्ति । यानि पुनर्लवणसमुद्रे शिखाचारीणि ज्योतिष्कविमानानि तानि तथाजगत्स्वा भाव्यादुदकस्फाटनस्वभावस्फाटिकमयानि, ततस्तेषामुदकमध्ये चरता मुदकेन न व्याघात, वारि द्विधा भवति, अग्रतो गमनान्तर जल पुनर्मिलति । लवणशिखा षोडशयोजनसहस्रोच्चा, ज्योतिष्काणा चारो नवशतेष्वेव । शिखाव्यतिकरस्त्वेवम्–विशेषमार्गरूपो नीचो नीचतरो भूप्रदेशो गोतीर्थमिव गोतीर्थम्, तच्च लवणोदधौ उभयत प्रत्येक पञ्च नवतियोजनसहस्रा । तत्रादौ जम्बूद्वीपधातकीजगत्यो समीपे समभू भागापेक्षया उण्डत्व तदुपरि जलवृद्धिश्च प्रत्येकमङ्गुलसख्येयभाग, तत पर क्रमादध ऊर्ध्व च तथाऽस्थिचित्प्रदेशाना हानिर्वृद्धिश्च यथा पञ्च नवतिसहस्रान्ते भूतलापेक्षयाऽधोवगाहो योजनसहस्रम् १०००, तदु परि जलवृद्धिश्च सप्तयोजनशतानि ७००, तत पर मध्यभागे दशयो जनसहस्राणि रथचक्रवद्विस्तीर्णभूतसमजलपट्टादूर्ध्व षोडशयोजनसह स्राण्युच्चा सहस्रमेकमधोऽवगाढा लवणशिखा वर्तते, तस्याश्चोपर्यहोरात्र मध्ये द्विवार किञ्चिन्न्यूने द्वे गव्यूते जलमधिकमधिक पातालकलशानायो क्षोभादुपशमाच्च वर्धते हीयते चेति । उक्त हि–" पचाणउइसहस्सो, गोतित्थ उभयओ वि लवणस्स । जोयणमयाण सत्त उ, उदगपरिवुड्ढि उभओ वि ॥ १ ॥ दसजोअणसाहस्सा, लवणसिहा चक्कवालओ रुदा । सोलससहस्स उच्चा, सहस्समेग च ओगाढा ॥ २ ॥ देसूणमद्धजोअण, लवणसिहोवरि दग दुवे काले । अइरेग अइरेग परिवड्ढइ हायए वावि ॥ ३ ॥" ॥ ९९ ॥ अथ लवणशिखाया ज्योतिष्काणामूर्ध्व तेज प्रसर

कियान्? इत्याह—

**लवणम्मि उ जोइसिया, उड्ढलेसा हवंति नायव्वा ।**
**तेण परं जोइसिया, अहलेसागा मुणेअव्वा ॥ ६६ ॥**

लव० । लवणसमुद्रे यानि ज्योतिष्कविमानानि तानि तथाजगत्स्वा भाव्याच्छिन्नाया प्रायान्यूर्ध्वलेश्यानानि, शिखायामपि सर्वत्रोर्ध्वं प्रकाशो भवतीत्यर्थः । ततोऽन्यद्वीपसमुद्रेषु चन्द्रसूर्यविमानानि 'अधोलेश्यानानि' अधोबहुलप्रकाशानीत्यर्थः । अयं चार्थः प्रायो बहूनामप्रतीत, परं श्रीजिनभद्रगणिक्षमाश्रमणविरचितविशेषणवतीग्रन्थाल्लिखितो न स्वमनीषयेति । तथा सर्वेषां ज्योतिष्काणां विमानान्यर्धीकृतकपित्थ फलाकाराणि । स्थापना यथा— मान चेह प्रमाणाङ्गुलेन । योजनस्यैक षष्टिभागा विधीयन्ते, तत्र क्रमेण समवृत्तत्वाच्चन्द्रविमानानामायामो विस्तारश्च षट्पञ्चाशद्भागा, सूर्यविमानानामष्टचत्वारिंशद्भागा, ग्रहविमानानां द्वे गव्यूते, क्रोशद्वयमिति हृदयम्, नक्षत्रविमानानामेकं क्रोशम्, ताराविमानानामर्धक्रोशम् । उच्चत्वे सर्वेषामेभ्योऽर्धम्, यथा—चन्द्राणां विमानान्युच्चत्वेऽष्टाविंशति, सूर्याणां चतुर्विंशति, ग्रहाणां क्रोशम्, नक्षत्राणामर्धक्रोशम्, ताराणां क्रोशचतुर्थभाग । इद ताराविमानेष्वा यामविष्कम्भोच्चत्वमुत्कृष्टस्थितीनामवसेयम् । जघन्यस्थितीनां तारकाणा मायामविष्कम्भाभ्यां पञ्चधनु शतानि, उच्चत्वेऽर्धतृतीयधनु शतानि । यदुक्तं तत्त्वार्थभाष्ये—"उत्कृष्टायास्ताराया अर्धक्रोशम्, जघन्यायाः पञ्चधनु शतानि, विष्कम्भार्द्धमुच्चत्वे भवन्ति ।" ज्योतिष्काणां विमानेषु वर्णविभाग संग्रहणीवृत्तिवचनाद्यथा—"तारा पञ्च वर्णा, शेषा

श्चत्वार उत्ततवनकवर्णा सन्ति " ॥ ९६ ॥ अथ मनुष्यलोकाद्बहिर्वर्तिना ज्योतिष्काणा किंचित्स्वरूपमाह—

**चित्तंतरलेसागा, चंदा सूरा अवट्ठिआ बाहिं ।**
**अभिजिइजोए चंदा, सूरा पुण पुस्सजोएसु ॥ ९७ ॥**

चित्त० । मनुष्यलोकाद्बहिर्दिवसा रात्रयश्चावस्थिता सन्ति, यतश्चित्रान्तरलेश्याकाश्चन्द्रा सूर्याश्च । सूर्याणामन्तरे चन्द्राश्चन्द्राणामन्तरे सूर्या, कोऽर्थ ? यत्र स्थाने दिवसस्तत्र सर्वकाल दिवस एव, यत्र च रात्रिस्तत्र सर्वदा रात्रिरेव । तत्र यथा चन्द्रसूर्या अवस्थितास्तथा रात्रिदिवसा अप्यवस्थिता । तत्रत्याश्चन्द्रा नात्यन्त शीता सूर्याश्च नात्यन्तमुष्णरश्मय । तथाभिजिन्नक्षत्रयोगे सर्वे चन्द्रा सर्वदा, सूर्या पुन पुष्यनक्षत्रयोगे सन्ति । तत्रान्यानि सर्वाणि नक्षत्राणि सन्ति पर भोग्यत्वेनैते स्त । एव ग्रहनक्षत्रतारका अपि स्थिरा ज्ञेया । एषा विमानाना मान चरज्योतिष्कादर्धम्, यथा चन्द्राणामष्टाविंशतिरेकषष्टिभागा आयामो विष्कम्भश्च, उच्चत्वे चतुर्दशभागा । सूर्याणा चतुर्विंशतिरेकषष्टिभागा आयामो विष्कम्भश्च, उच्चत्वे द्वादश भागा । ग्रहाणामेक क्रोशमुच्चत्वेऽर्धम् । नक्षत्राणामर्द्धक्रोशमुच्चत्वे चतुर्थांश । ताराणा क्रोशचतुर्थांश उच्चत्वेऽष्टमांश । स्थिराणा ज्योतिष्काणामायूंषि चराणा पञ्चानामिव ज्ञेयानि । किंच स्थिरचन्द्रसूर्याणा पङ्क्तिविषये बहूनि मतानि सन्ति तान्यत्र ग्रन्थगौरवभयान्न लिखितानि, संग्रहणीवृत्त्यादिभ्यो ज्ञेयानि ॥ ९७ ॥

**तवगणगयणदिणेसरखरीसरविजयसेणसुपसाया ।**
**नरखित्तचारिचंदाइआण मंडलगमाईणं ॥ ९८ ॥**

एसो विश्रारलेसो, जीवाभिगमाइआगमेहिंतो ।
विणयकुसलेण लिहिओ, सरणत्थं सपरगाहाहिं ॥ ६६ ॥

॥ इति मण्डलप्रकरणं सपूर्णम् ॥

तव० । एसो० । स्वकृतपरकृतगाथाभिः स्मृत्यर्थं लिखितो विचारलेशो न नूतनो विहितः किन्तु श्रीमुनिचन्द्रसूरिकृतमण्डलकुलकमेव प्रतिसंस्कृत्वं जीवाभिगमादिगाथाभिः कतिभिः कतिभिर्नूतनाभिश्च । शेषं स्पष्टम् ॥९८॥९९॥ इति मण्डलप्रकरणवृत्तिः संपूर्णा ॥

## अथ प्रशस्तिः ।

गुरुतमतपगणपुष्करसूर्याः श्रीविजयसेनसूरीन्द्राः ।
श्रीमदकब्बरनरवरविहितप्रबलप्रमोदा ये ॥ १ ॥
तेषां शिशुना वृत्तिः, स्वोपज्ञा व्यरचि विनयकुशलेन ।
मूलत्राणाहपुरे, करयाणरसेन्दु १६५२ मितवर्षे ॥ २ ॥
विरचितविबुधानन्दाः, विबुधाः श्रीलाभविजयनामानः ।
तैरेतस्याः शोधनसान्निध्यमधायि सुप्रज्ञैः ॥ ३ ॥
यच्च विरुद्धं किञ्चिद्भवति हि मतिमान्द्यतस्तथापीह ।
शोध्यमनुग्रहबुद्ध्या, येनेयं भवति सुपवित्रा ॥ ४ ॥

# टीकागतप्रमाणानां वर्णक्रमानुसारि परिशिष्टम् नं.-१

# टीकायां प्रमाणत्वेनोद्धृतानां ग्रन्थानां वर्णक्रमानुसारि परिशिष्टम् नं. २